# रोचन्तां शब्द भूमयः

(The Novelty of the Words)

डा. सुद्युम्न आचार्यः

# रोचन्तां शब्दभूमयः

## (The novelty of the words)



लेखक :

**डा० सुद्युम्न आचार्यः**

व्याकरणाचार्यः, M. A. (अष्टस्वर्णपदकविजेता) D. Phil.

स्नातकोत्तर संस्कृत विभाग

मु० म० टाउन पोस्ट ग्रेजुएट कालेज

बलिया (उ० प्र०)




गृहनिवास :

**वेद वाणी वितानम्**

प्राच्य विद्या शोध संस्थानम्

कोलगवाँ, सतना (म० प्र०)

**1991**

प्रथमवृत्तिः—८००

मूल्यम् ४०/-

पुस्तकमिदं

शब्दशास्त्रावगाहनतत्पराणां
तिलहरशाहजहाँपुरनगरान्तर्गतस्य
गुरुकुल म० वि० रुद्रपुरस्य
प्राचार्याणां श्रीमतां सूर्यदेवमहोदयानां
सौजन्येन प्रकाशितम् ।।

यस्मिन्नृचः सरस-
सामरुचो यजूंषि ।
यस्मिन् स्थितानि हि
रथे नाभाविवाराः ।
यस्मिंश्च चित्तमथ
सन्निहितं प्रजानाम् ।
तन्नो वचः शिव-
कथासंकल्पमस्तु ॥

**Prof. R. N. DANDEKAR**

Bhandarkar Oriental
Research Institute,
Poona 411 004 (India)

I knew that Dr. Sudyumna Acharya was a promissing Pāṇinian scholar, but I did not know that he also possessed such a charming sense of humour. His *Rocantām Śabdabhūmayaḥ* is a collection of interesting skits mostly based on linguistic ideas. Four things have struck me while going through some portions of this book; (1) Dr. Acharya has a facile style of writing in Sanskrit; (2) he is a fairly well-read person; (3) he is a keen observer of commonplace men and things; and (4) he has nowhere allowed his humour to descend to a low level.

I wish that Dr. Acharya's *Śāstra* and *vinoda* continue to develop in fruitful consonance.

R. N. Dandekar

Prof. R. N. DANDEKAR

Bhandarkar Oriental
Research Institute
Poona 411004 (India)

अहं पाणिनीयशास्त्रेष्वधीतिनं डा० सुद्युम्न आचार्यं पूर्वमेवाज्ञासिषम्, परमसौ किमप्यपूर्वां रुचिरां हास्य-भावनामप्यभिरक्षतीति नाहं पूर्वमवेदिषम्। अस्य 'रोचन्तां शब्दभूमय' इति प्रायशो भाषाविज्ञानाधृतो निबन्धसंग्रहो विद्यते। अस्य कतिपयानामंशानामध्ययनसमये तथ्य-चतुष्टयं मनसि मे समायातम्—१. डा० आचार्यः संस्कृतलेखने प्रवाहमयीं शैलीमभिरक्षति। २. सर्वथा शास्त्रेषु लब्धवर्णोऽयं जनः। ३. अयं हि साधारणं प्राणिनं, वस्तुतत्त्वमपि निपुणं निरीक्षते। ४. अस्य हास्यं न कदापि निम्नतामेति।

डा० आचार्यस्य काव्यशास्त्रविनोदोऽग्रेऽपि सफलं समेधतामिति कामयते—

आर० एन० दाण्डेकरः

**विद्यानिवास मिश्र**
कुलपति
सम्पूर्णानन्द संस्कृत विश्वविद्यालय
वाराणसी–२२१००२

दूरलेख–श्रुतम्
दूरभाष { ४३९११ कार्यालय
४३८३० आवास

## प्ररोचना

'रोचन्तां शब्दभूमय' इत्याख्यो लघुनिबन्धसंग्रहो मया अवालोकि। ग्रन्थस्य प्रणेतारं श्रीसुद्युम्नाचार्यं बहुभिर्वर्षैः शब्दशास्त्रे निरन्तरं रममाणं पश्यामि, समानधर्मितया परितोषं चावहामि यद्येते शब्दानां यात्रासु किंचनापूर्वं समुल्लासमनुभवन्ति। शब्दा हि एतादृशानुसन्धानेन प्राणवन्तो विहगा इव उत्पतन्ति मनो रमयन्ति च। श्रीसुद्युम्नाचार्याणां निबन्धेषु केवलं व्युत्पत्तिप्रदर्शनमेव न दृश्यते, काचन रम्या वाग्विच्छित्तिरपि सुद्योतते। शब्दैः सह पर्यटनं संस्कृते दिग्बोधाय भवतीति प्रस्तुतैर्निबन्धैः सुष्ठु प्रमाणीक्रियते।

भूयोभूय एतेऽस्मिन् शब्दसाधने रमन्तामन्यांश्च रमयेयुरिति कामयते—

**विद्यानिवास मिश्रः**

डा० सत्यव्रत शास्त्री

संस्कृत विभाग
दिल्ली विश्वविद्यालय
दिल्ली

## शुभाशंसनम्

रोचन्तां शब्दभूमय इति रुचिराणां भाषाशास्त्रसम्बद्धानां निबन्धानां डा० सुद्युम्नाचार्यविरचितानां संग्रहः। अत्र ललितया शैल्या परिहासपुटमादधत्या गूढातिगूढा भाषाशास्त्रविषयका विषया आचार्यवर्यैर्विमृष्टा यानालोच्याचार्यवर्याणां सूक्ष्मेक्षिकां प्रशंसन् कोऽपि जनः स्मेरमुखो भविष्यति, भाषाशास्त्रमतिशुष्को विषय इति च मतिं परिहास्यति। अहमस्य ग्रन्थस्य विद्वज्जनैः समादरं वाञ्छामि। एतादृशग्रन्थान्तरविरचनेऽपि क्रमन्तामाचार्यवर्या इति चाभिलषामि—

इति शुभाशंसा
सुरसरस्वतीसमाराधनैकव्रतस्य
सत्यव्रतशास्त्रिणः

डा० राधावल्लभ त्रिपाठी
आचार्य तथा अध्यक्ष

संस्कृतविभाग
डा० हरीसिंह गौर विश्वविद्यालय
सागर

एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुक् भवतीति महाभाष्यकारवचश्चरितार्थयता शब्दशास्त्रपारावार-धुरीणेन व्याकरणचणेन सुद्युम्नाचार्यपण्डितेन रोचन्तां शब्दभूमय इत्यस्यां कृतौ अपूर्वैव कापि वैपश्चिती सहृदयता चाविष्कृता। इह सङ्कलिता निबन्धाः क्वचित् शब्दमर्मावगाहन-पुरस्सरं सांस्कृतिकमैतिह्यं समुद्घाटयन्ति, क्वचिद् भाषाया विकासं सूचयन्ति, क्वचिच्च दुर्नयमपनयन्ति, अज्ञानजन्यदुरितं च दूरीकुर्वन्ति। भाषासरणिरतीव मनोहारिणी आधुनिकललित-निबन्धविधाया लालित्यमाविष्करोति लेखकस्य साहसं वस्तु-परकमूल्याङ्कनक्षमतां च परिचाययति।

अन्ततश्चाशास्यते—

साहित्ये सुकुमारवस्तुनि समं तर्के तथा कर्कशे।
दीप्यन्तः सहजं प्रसन्नमधुरं भ्राजिष्णु रोचिष्णु याः।
सुद्युम्नस्य पदप्रमाणधिषणाधीतिप्रभाभास्वरा।
रोचन्तां खलु शब्दभूमय इह स्वर्गापवर्गप्रदाः।

डा० राधावल्लभ त्रिपाठी

आचार्या डा० प्रज्ञा देवी

पाणिनि कन्या महाविद्यालय
पो० बजरडीहा तुलसीपुर
वाराणसी-१०

ओ३म्

"रोचन्तां शब्दभूमयः" नाम्नि पुस्तके शब्दाक्रीडिना लेखकेन ये शब्दास्सुविचारितास्तैः विदुषो लेखकस्य सूक्ष्मेक्षिकेव नावगम्यते अपितु तस्य मञ्जुमञ्जुलसरस-सहृदयकलापक्षस्यापि सहजबोधो भवति। पुस्तकमिदं समानरूपेण समेषां चित्तमाह्लादयिष्यतीत्यत्र नास्ति सन्देहावसरः। तदर्थं डॉ० सुद्युम्नाचार्यमहाभागा अतीव साधुवादार्हाः।

लेखकमहानुभावोऽयं मूलतः संस्कृतव्याकरण-दर्शन-निरुक्तादिकस्य विद्वान् पण्डितोऽतश्चास्माभिरेतदपेक्ष्यते यत् लेखकमहानुभावो वैदिकप्रणाल्यनुसारं निरुक्तव्याकरणादि-विषयेष्वपि सत्वरं नूतनां कृतिं विधास्यति येन नैके जिज्ञासवः प्रशस्तपन्थानः स्युरिति।

अन्ते च डॉ० सुद्युम्नाचार्यमहोदयानां लेखनी अविरलां गतिं प्राप्नुयादिति जगन्नियन्ता भगवान् भूयो भूयः प्रार्थ्यते॥

शुभेच्छुका भगिनी
प्रज्ञा देवी

## UNIVERSITY OF POONA

DEPARTMENT OF SANSKRIT AND PRAKRIT LANGUAGES

*Saroja Bhate*
Professor and
Head of the Department

Ganeshkhind,
Pune-411007.

डॉ० सुद्युम्न आचार्यमहोदयैः लिखितम् रोचन्तां शब्दभूमय इति पुस्तकस्य अंशं पठित्वा महान् हर्षः संवृत्तः। परिचितानां विविधानां शब्दानां मूलस्रोतोगवेषणे तैः संसूचितां बुद्धिचातुरीं दृष्ट्वा अयं तु अभिनवयास्क इत्येव विचारः मनसि समायाति। शब्दकथानाम् अयं सङ्ग्रहः रञ्जयतु विदुषां मनांसि इत्याशासे।

**सरोजा भाटे**

**डॉ. भागीरथ प्रसाद त्रिपाठी**
'वागीशः शास्त्री'

**निदेशक,**
अनुसन्धान-संस्थान
सम्पूर्णानन्द संस्कृत
विश्वविद्यालय
वाराणसी-२२१ ००२

डॉ० सुद्युम्नाचार्यस्य 'रोचन्तां शब्दभूमयः' इत्याख्यां कृतिमक्षिसाक्षीकृत्य प्रसीदामि। शब्दशास्त्रस्य साहित्यमुखेन समुपन्यासप्रयासोऽयं नूनमुत्साहसंवर्द्धनार्हः। तल्लालिता संवर्तिकेयं शब्दज्ञानसौरभसमुल्लसिता जिज्ञासूनवश्यं प्रीणयिष्यतीति विश्वसिति।

**डॉ० भागीरथ प्रसाद त्रिपाठी**
**वागीशः शास्त्री**

## वाङ्मुखम्

इयमस्ति वाग्देवी या मनुष्यं पशुभ्यो विविनक्तीत्यत्र नास्ति कश्चन सन्देहावसरः। एवं यदपि ज्ञानं विज्ञानं चार्जयति मानवस्तत् सर्वं वाचि प्रतिष्ठितं विद्यते। सर्वेषां वेदानां वागेकायनमित्युपनिषदं वचोऽद्यापि सत्यं सन्तिष्ठते। शब्दरज्जुबद्धा एव भावा अद्याप्यस्तितां भजन्ते। भावसंरक्षणाय, भावप्रकाशनाय वा नान्यः पन्था विद्यतेऽयनाय ऋते शब्दात्। भावप्रकाशनं तावद्दूरत आस्ताम्, चिन्तनमपि न सम्भवति मनोमयीं वाचं विनेत्यस्ति वाचो माहात्म्यम्। अतएव 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति इत्यादिषु वाक्येषु शब्दानां ब्रह्मरूपतोक्तिः संगच्छते।

शब्दानां वस्तुभिः सहाविनाभावसम्बन्धं समीक्ष्यैव वस्तुषु शब्दानुवेधसिद्धान्तोऽपि स्वीकृतः विद्वद्भिः। वस्त्वर्थे 'पदार्थ' शब्दप्रयोगोऽप्यदसीयमर्थमभिव्यनक्ति। यतोहि नास्ति किंचन वस्तु यत् पदस्यार्थं न स्यात्।

एवं सर्वमप्यैतिह्यं वाचि सुरक्षितं विद्यते। वागियं द्विविधेनोपायेनैतिह्यं गोपायति। महाभारतपुराणादयः ग्रन्था वाग्रूपास्सन्त ऐतिह्यं विवृण्वते। अथ च शब्दानां स्वरूपमपि ऐतिह्यमभिरक्षति। शब्दास्तेषामर्थाश्च कालचक्रक्रमेण परिवर्तन्ते। समाजनदीप्रवाहपतिताश्शब्दाः कथं नाम तदनुवर्तिविधेयाः न स्युः। एवं शब्दार्थोऽयं मुख्यतोऽर्थविस्तारः, अर्थसंकोचः, अर्थातिदेशरूपेण परिवर्तते।

सर्वेषामपि शब्दानां न भवति छन्दतः परिवर्तनम्। अपितु समाजभावनानुसारि तत् सम्पद्यते। एवं नातिभिन्ना कथाऽस्ति शब्दानां प्रस्तराणां च। यथा प्रस्तरेषु वृक्षाणां वृक्षपत्राणां वाऽऽकृतिरुत्कीर्णा भवति, प्रस्तराः स्वयमपि स्वसन्निहिताकृतिं धारयन्ति। प्रस्तरेषु तेनोट्टंकनेन तेषां प्राचीनाऽवस्थितिः शक्यतेऽभिज्ञातुम्। विशेषज्ञानां कृते नाविदितचरा भवति तेषां पद्धतिः, वृक्षादिहतिर्वा !! एवं शाब्दिकोऽयं यावद्वेदं शब्दान् निपुणं निरीक्षते, तेषां परिवर्तनस्य व्यथाकथां यथातथं प्रतिपद्यते। पश्चाच्च जनानां पुरतस्सर्वमाख्यानम् अनितरोपायगम्यं चैतिह्यं प्रस्तौति।

लघुनिबन्धा इमे अर्थममुम् उद्दिश्य विरचिताः। शब्दानां शब्दार्थानां चैतिह्यं तदनु साहित्यगतप्रमाणं च पुरस्कृत्य तद्विषयकसर्वांगसम्पूर्ण-विवरणाय क्रमन्ते इमे निबन्धाः। सम्बद्धविषयेषु रोचकतासम्पादनाय च प्रथन्ते इमे लेखाः। निबन्धा इमे वस्तुतः 'शब्दानामालोके भारतीय-चिन्तनस्यैतिह्यम्' इति शीर्षकयुतस्य, विश्वविद्यालयानुदानायोगसंरक्षणे बृहत्यां शोधयोजनायां विरच्यमानस्य बृहद्ग्रन्थस्य पूर्वरूपाः। कियन्मात्रं साफल्यं मयोपगतम् इत्यत्र स्वहृदयसंवादभाजः सहृदयाः विद्वांसः प्रमाणम्।

**धन्यवादप्रकाशनम्**—अहं सर्वप्रथमं गुरुवर्यं स्वर्गीयं पण्डितप्रवरं पदवाक्यप्रमाणज्ञं ब्रह्मदत्तजिज्ञासुमहोदयं सबहुमानं, सशिरोणामं पूजयामि, येषां कृपाकूपारेण किंचिदहं ज्ञातुमशकम्। वात्सल्यमूर्तयः परमविद्वांसः आचार्य—डा० विजयपालमहाभागाः मामध्यापिपन्—तान् प्रति न कदाप्य-नृणीभवितुं शक्नोमि। पितृवर्यं स्वर्गीयं श्रीमन्तं कमला प्रसादमहोदयमहं ध्यायं ध्यायं प्रसीदामि, नामं नामं प्रशंसामि, येषां परिकल्पनमिदानीं वेदवाणीवितानमनामधेयं संस्थानरूपं गृह्णाति। मम जननी श्रीमती हर-देवीमहोदया मम निर्माणे यान् क्लेशपूगानसहत, कथं मादृशोऽसौ जनस्तान् गणयितुं क्षमः। मम प्रेष्ठा भगिनी वेदादिष्वग्रधिषणा, तपस्विनी पं० मेधा देवी व्याकरणाचार्या, अथ च मे ज्येष्ठा भगिनी संस्कृतजगति ख्यात-नाम्नी, शास्त्रेषु लब्धवर्णा, विपश्चिदपश्चिमा डा० प्रज्ञा देवी महोदया च सदैव मां प्रोत्साहितवत्यौ, अतस्ते प्रति समादरं कृतज्ञतां च ज्ञापयामि। शब्दशास्त्रे पाण्डित्यं लब्धवत्या विदुष्या प्रियंवदया कतिपये शब्दा विमर्शिता, अतस्तस्यै ननु कति आशिष उपहरानि !!

विदुषां धुरि कीर्तनीयाः डा० आर० एन० दाण्डेकरमहोदयाः, विद्वत्सु वरेण्यतमाः डा० विद्यानिवासमिश्रमहोदयाः, विदुषां मूर्धन्यतमाः डा० सत्यव्रतशास्त्रिमहाभागाः, अन्ये च समादरणीयाः विद्वांस आशीर्वचः-प्रदानेन मां वशंवदं निरवीवृतन् अथ चानेके गुरवः मामध्यापिपन्—तान् सर्वान् प्रति विनयं समादरं च निवेदयामि।

पुस्तके वर्तमानां त्रुटिं विद्वांसः क्षमन्तामिति च प्रार्थयति—

विदुषां विधेयः

**सुद्युम्नः**

## PREFACE

The art of speech has played a predominent role to distinguish a man from all other species in the world. This art has enabled him to preserve all experiences, all information received from time to time in the storehouse made of words. The human race, in fact, under the sun, has no better recorder of all vibrations of thought than words. No other thing so mild in its appearance and at the same time so concrete to record all ups and downs, we have ever thought or heard of !

Words thus became an integral part of man's life. We speak, we convey our views to others only by vehicle of words. Not to speak of expressing our views, we cannot even think a bit without the help of words ! The words are thus reasonably likened to the Supreme Being (शब्द ब्रह्म).

Indian wisdom was also conscious of the view that all substances of the world were inseparably connected with the words. A compound word पदार्थ for substance entertains the thesis of firm connection between sound and sense.

Thus was effectively preserved everything in history through words. What is beyond words is also beyond our perception. Taking this view into account the dawn of world history resolved itself into the dawn of words.

Words served our history twofold. Firstly they having been essential component of a language have recorded the history of art and science. Secondly, they themselves have undergone various

changes in both-their formations and their meanings yielding place to new. How could the words—the inheritence of varying people of society—remain unchanged in course of transmission ? The meanings of the words have undergone changes mainly in three directions, viz. expansion of meaning, contraction of meaning and transference of meaning. Through such process have they preserved a mark of various incidents and thoughts of history.

Words thus have no more different fate than that of a stone lying in water-fall or that of fossils. Fossils as we know, clearly have the stamp of what become of them during the course of time and speak about their autobiography to the specialist of their branch who has the key of deciphering them. The science of words thus offers a wide open spaces for researchers. The body of the words conceal in itself a valuable information, a mysterious knowledge and sometimes much more than that. No sooner does a researcher enter into the domain of words than he finds out such a wealth of thought.

This work has lain in the humble sphere of weaving literary and cultural studies out of the thread of words. My attempt is to piece together the scraps of information supplied by isolated words and their variations in our vast literature and conjure up thereby a new vivid and interesting picture hardly known otherwise. This collection of articles precedes my comprehensive work entitled '*Indian heritage, as reflected by linguistics,* under

a major research project, sponsored and financed by the University Grants Commission, New Delhi. How far I have succeeded in scoring much-desired goal, it is for my indulgent readers to judge.

My grateful appreciation is due to my "Guru ji"—Pt. Brahma Datta ji Jijnasu of whom galaxy of pupils are still shining forth and holding various departments with dignity and decorum. I am obliged very much to a great revered scholar Acharya Dr. Vijayapalji who has kindly taught me a number of books. To my father, sacred to my memory, Late Shri Kamala Prasad ji, my reverence is due whose broad vision of life is taking substance in the shape of this research Institute. How can I forget the deep love of my mother—Smt. Hardeviji who has fondly brought me up ! I am grateful very much to my elder sister–a renowned scholar in Sanskrit Dr. Pragya Deviji and my younger sister Pt. Medha Devi Vyakaranacharya who have always encouraged me for the cause of study. I have admirations to a great scholar Priyamvada who has discussed some of the words.

I express my sincere gratitude to the most venerable Panditas of erudite and profound scholarship—Dr. R. N. Dandekar, Dr. V. N. Mishra, Dr. Satyavrat Shastri and all other scholars who have kindly extended valuable opinions for this book. Begging apology for the shortcomings in the book, I remain—

**Sudyumna**

# विषयानुक्रमः

# नसोर्मे प्राणोऽस्तु

मुखे वाणीम्, अक्ष्णोः दर्शनशक्तिं, कर्णयोः श्रवणशक्तिं कामयमानः ऋषिः प्रार्थयते—'नसोर्मे प्राणोऽस्तु'। नायं तत्र गन्धं घ्राणशक्तिं वा प्रार्थयते। किमत्र कारणम्? इदमेव यदिन्द्रियराजस्तत्र तिष्ठति। यस्याभावे सर्वाण्यपीन्द्रियाणि मुञ्चन्ति सार्थकतां, त्यजन्ति चारितार्थ्यं स तत्र विराजते। तानीन्द्रियाणि सबहुमानं सशिरोणामं कथयन्तीव तं प्राणम्—'गच्छन्तु नाम श्रवणशक्तयः, अपयन्तु नाम घ्राणशक्तयः, परं मा स्म गमः कदाचित् प्राणः। अत एव वेदा वा स्युरुपनिषदो वा सर्वेऽपि प्राणानां महत्त्वं सममनुमेनिरे[1]।

नसोर्गन्धः स्याद् वा नेवेत्येवं नासीत् तदानीं चिन्ताप्रसारः। यथाऽक्ष्णा कर्णेन वा विकलः दुःखाम्भोधौ निमज्जति स्म, न तथा घ्राणेन हीनो जनः। अत एवाक्ष्यादिभिर्विकलानां पुरुषाणां कृते 'अन्धः' 'बधिरः' इत्यादयश्शब्दा आविष्कृता। परं घ्राणशक्तिविकलाय न कोऽपि शब्दः विकासमाप। वैदेशिका अपि तथ्यमेतत् समं मन्वते[2]।

एवं श्वासोऽयं परं प्राधान्यं भजते। सर्वं मे वपुः; सर्वं मे कार्यं श्वासवायुभिरस्त्यवकीलितम्। स वायुः यो न कदापि बध्यते मुष्टिभिः—एष जवति, रंहति, धावति च प्रतिदिशम्—स एष वायुरवकीलतीन्द्रिय-

---

१. द्रष्टव्यम्—अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च॥
—प्रश्नोपनिषद् २।६

२. मनुष्य की दुनियां में गन्ध बहुत मामूली भूमिका अदा करती है। इसका एक प्रमाण यह तथ्य है कि हमारी भाषा में अन्धापन और बहरापन के अनुरूप कोई ऐसा सामान्य शब्द नहीं जो सूंघने के अभाव को प्रकट करता हो—प्राणिशरीर का क्रिया विज्ञान-नट श्मिट नील्सन पृ० १०६।

ग्रामं, टंकयति अंगसन्धिम्, योजयति च जीवनम् ! ! एवम् इन्द्रियाणि कतिपयानि गच्छन्तु नाम, परं श्वासोऽयम् आजीवनं तिष्ठति । अत एवायं विश्वासस्य पराकाष्ठा, परमं प्रतिमानम् । विश्वासशब्दोऽयं विस्रम्भार्थे अनेनैव हेतुना समवर्तत । यतो हि जीवने नास्ति कोऽपि विस्रम्भः श्वासाधिकः[१] ।

**वेदेषु नासिका**—एवं महतीं काष्ठां प्राप्नुवन्तं श्वासं नासिकेयम् अभिरक्षतीत्यतः सा वैदिककालादेव प्राधान्यं भजते स्म । 'श्वासस्तु मुखेऽपि वर्तितुं शक्नोति, किम्फलेयं नासिका' इत्येवं नासीत्तेषां मतिः । 'मुखं विमुच्य श्वसितस्य धारया वृथैव नासापथधावनश्रमः' इत्येवमनुचिन्तनं दूरम् अपास्तं तेषां कृते । प्राणानियमभिरक्षतीति मतिरेव केवला नासिकां सर्वललामभूतां व्यदधात् । अत एव सौन्दर्यं यदि नासिका वृणीते, अन्येन वर्णेन किम्—इत्येवं सर्वेऽपि ऋषयः मन्वते स्म । तथा च ऋषयस्ते मनोहरायाः नासिकायाः प्रतिमानमुपास्थापयन्—न स्यादत्युच्चा, नाप्यत्यल्पा, नीचैः किञ्चिच्च प्रह्वीभूता या नासिका सा कमनीयतामियर्ति । एवंभूता नासिकावन्तो जना अतिशेरते समाजेषु ।

**अनासा इमे किराताः**—ते रूपेणानेन विपरीतरीतीनां नासिकाधारिणामुपहासमकार्षुः । पर्वतीयानां किरातादिजातीनां नासिका किंचिच्चिपिटा भवति । अतस्ते ऋषयस्तान् प्रति ब्रुवते स्म—'पश्यत भोः किम्मनुष्यान् इमान्, ये हि नासिकां-प्रतिमानं सौन्दर्यस्य, अभिमानं च रूपस्य-न रक्षन्ति स्वकीये वदने । अत एव ते नसक्षुद्राः सन्तः नररूपेणापि सम्बोधयितुं योग्या वा न वा ! ! (तेषां कृते 'किन्नर'शब्दोऽयं नासिकाविहीनत्वात् तेषां नरत्वमाक्षिपन् क्षेपार्थकः सन् अन्ततो जातिनामधेयतां प्राप्तः ! ! ) प्रसार्यतामत्रार्थे वेदवाक्यम्—

**अनासो दस्यूँरमृणो वधेन नि दुर्योण आमृणङ् मृध्रवाचः ।**

ऋ० ५।२९।१०]

---

१. परवर्तियुगेषु श्वासस्य गन्धहेतुत्वम् अवधार्य श्वासशब्दः 'सुवास' रूपेण गन्धार्थकोऽपि समवर्तत । अस्यैवापभ्रष्टानि रूपाणि बासा, बासी इत्यादीनि द्रष्टुं शक्यन्ते ।

किमत्राश्चर्यम्, यदि ते दस्यवः इमान् वैदिकान् 'लम्बनास' रूपेणो-पहासमकार्षुः[१]।

परं लम्बनासिकयाऽपि न प्रमाणाधिकया भाव्यम्। अन्यथा सा 'उरूणस'[२] रूपेण वा 'पवीनस'[3] (वज्र इव भयंकरा नासिका) शब्देन वा निन्दां प्राप्स्यति। तैत्तिरीयसंहितायुगे तु घट इव महती गोलाकारा नासिका प्राप्यते स्म। नासिकैषा कुम्भीनस-शब्देन तत्र वर्णिता। (तै. सं. ५।५।१४।१)

**कथा शुकनासस्य**—नासिका सैव कमनीया या शुकस्य नासिकेव किंचित् प्रह्वीभूता स्यात्। एवंभूता नासिका तथाऽररञ्जन् मनांसि जनानां यत् बहवो मनुष्या शुकनास इत्येव स्वं नामधेयम् अकार्षुः। अनेनैव वैशिष्ट्येण पूर्वं शुकनासोपदेशः महतीं ख्यातिं प्राप्नोत्। एवं भूतैव नासिका 'भलानस' शब्देन प्रोक्ता वेदे[४]।

**पाणिनिसमये नासिका**—प्राणिनिकाले यो हि पुरुषः किरातवन्नासिकां धारयति स्म, स चिकिनः, चिपिट इत्येवं प्रोच्यते स्म[५]। नासिकाया चिपिटताऽसौ तथा भुवि परिवृढा यत् परवर्तिकालेषु सर्वाण्यपि चिपिट-वस्तूनि 'चपटा' शब्देन व्यवाहरन् जनाः। अद्यापि 'चपटा' शब्दः भृशं व्यवह्रियते। को नाम जानाति स्म पूर्वं यन्नासिकाया चिपिटता सर्वेष्वपि वस्तुषु समं प्रसरिष्यति।

एवं यस्य मनुष्यस्य नासापुटयोः घनाः केशाः स 'निबिडः, निबिरीसः' इत्येवं व्यवह्रियते स्म[६]। केशानामिदं घनत्वं सौन्दर्यस्य,

---

१. उनकी चिपटी और छोटी नाकों को आर्य अनास खनास कह सकते थे। पर किरात भी आर्यो को लम्बनास, अश्वनास कह कर कुरूप बता सकते थे—राहुल सांकृत्यायनकृतस्य 'दिवोदास' पुस्तकस्य अबला सेना परिच्छेदः पृ० ११७।

२. उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु।
—ऋ १०/१४/१२

३. पवीनसात्तंगल्वाच्छायकादुत नग्नकात्। —अथर्व ८/६/२१

४. अथ पक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः।
—ऋ० ७/१८/७

५. इनच्पिटच्चिकचि च। —पा. सू. ५/२/३३

६. नेर्बिडज्बिरीसचौ (पा० सू० ५/२/३२)

कमनीयतायाश्च प्रतिमानं बभूव। अत एव जनाः सर्वाण्यपि घनानि वस्तुजातानि निबिडरूपेण वक्तुमारेभिरे। व्याख्याकारैरुक्तं यत् वस्त्रादीनामपि निबिडत्वं नासिकागतघनकेशौपम्यात् सिद्ध्यति[१]। उपमानमिदं कियदस्ति रुचिरमित्यर्थे देवाः प्रमाणम्!

पाणिनिसमये परिमाणतोऽधिकायाः नासिकायाः धारका अपि पुरुषा वर्तन्ते स्म। तेषां कृते सुबहवश्शब्दाः वाचमारूढाः लोके। तथाहि विनतनासिकावतां पुरुषाणां कृते 'अवटीटः, अवनाटः, अवभ्रटः' इमे शब्दा अस्तित्वमुपयाताः[२]। स्त्रीणामपि दीर्घनासिकात्वं सौन्दर्यानुगतमासीत्। अत एव तासां कृते 'दीर्घनासिकी' इत्येवं पृथग्विधानं पाणिनिना सम्पादितम्[3]।

**बाणभट्टस्य लम्बनासिका**—महाकविबाणभट्टाय लम्बनासिकतेयं तथा प्रियंकरणा समभूत् यत् स नासिकां वंशरूपेण प्राभाषत। तस्य हि मतमिदं—यत्-आयते नेत्रे विशालनदीरूपे, तत्र वर्तमानः नासावंशस्तु तस्यां नद्यां द्राघीयान् सेतुरिव[४]। मन्ये तुंगनासिकायाः पराकाष्ठा अस्यामेव कल्पनायां विराजते।

**विदेशेषु लम्बनासिका**—नासिकेयं प्रकाममहार्षीन्मनांसि वैदेशिकानामपि। तत्र हि लम्बनासिकया, लघुनासिकया च विश्वस्येतिहासः प्रवर्तितः विनष्टश्च। प्रसिद्ध इतिहासज्ञः 'ब्लैज पैस्कलः' यथा ब्रवीति तथा विश्वस्येतिहासगतिः स्याद् विपरीता यदि क्लियोपेत्रा' नामधेयायाः रमण्याः नासिका काचन लघ्वी स्यात्[५]।

---

१. कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद् भविष्यति। (उपरिलिखिते सूत्रे काशिका)

२. नते नासिकायां संज्ञायां टीटञ्नाटज्भ्रटचः (पा० सू० ५/२/३१)

३. नासिकोदरोष्ठजंघादन्तकर्णशृंगाच्च (पा० सू ४/१/५५)

४. आयतनयननदीसीमान्तसेतुबन्धेन ललाटतटशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा नासावंशेन शोभमानम्। (हर्षचरितस्य प्रथम उच्छ्वासः)

५. Had cleopatra's nose been shorter, the whole face of the world would have been changed (Pensees II. 162)

**नवविकासवादिनां नासिका**—नवविकासवादिनां तु मतमिदं यत् लम्बनासिकतेयं मनुष्यादपि पूर्वस्मिन् पशौ सुवर्तमानाऽऽसीत्। तथाहि मनुष्योऽयं पशुष्वन्यतमः। मनुष्योऽपि पशुः, तस्य पूर्वजा अपि पशवः। मनुष्याणां पशुत्वं तु वैदिकसाहित्येऽपि स्वीक्रियते[1]। तत्र मनुष्यात् पूर्वस्मिन् वानरे दीर्घनासिका दीर्घनालिकारूपेण वर्तमानाऽऽसीत्। यथाऽद्यापि वानरे धेन्वनडुहयोरन्येषु च पशुषु समं दृश्यते।

परं वानराणां विकासप्रक्रियायां सर्वप्रथमः प्रहारः नासिकायां समपद्यत। तेन नासिकेयं शनैः शनैः चिपिटा उदञ्चिता च समभूत्। परं वानराणां सर्वास्वपि प्रजातिष्वियमेव कल्पना परिवृढा यत् लम्बनासिकतैव भवति समीची, यथाऽऽस्माकीनाः पूर्वजाः। अत एव लम्बनासिकता सौन्दर्यस्य प्रतिमानं समभूत्।

परं या अपि प्रजातयः आहोपुरुषिकया स्वकीयां लम्बनासिकां प्रशंसन्ति स्म, तासामपि नासिका वानरापेक्षया तु चिपिटैवासीत्। परं ते किं कुर्वन्तु नाम, तासां कुशकाशावलम्बनमेव श्रेयः!!

इदमस्ति ललामभूताया नासिकाया ऐतिह्यम्। यस्या दीर्घता प्रतियुगमहोरात्रञ्च प्रार्थिता सैव चिपिटा समभूत्। साम्प्रतं येयं नासिका मानवानामधिमुखं तिष्ठति, सेयं नास्ति सुषमा। इदानीं प्रथमं तावदियमूर्ध्वं व्रजति। प्राणाश्चैनामाश्रित्य पूर्वमूर्ध्वं पश्चाच्चाधोमुखं व्रजन्ति। स्थानञ्चात्र महत् स्वल्पम्। अत एव यदि कश्चन पुरुषः छिक्कामध्ये मुखं नोद्घाटयेत् तर्हि तस्य नासिका विदीर्येत। परं पशूनां कृते तु नैषा भीतिः, तेषां दीर्घनासिकत्वात् सरलनासिकत्वाच्च।

परं स्यात् किमपि। अस्माकं सर्वं सौन्दर्यं सर्वं गौरवं, सर्वाऽपि प्रतिष्ठा नासिकायामेव तिष्ठति। अत एव गौरवगरिमाणम् उपयाते सति 'विजयतेऽसौ नासिका' (नाक ऊँची हो गई) इत्येवं भणन्ति भाषाविदः।

कतिपये जना गन्धं प्रमुखं वस्तुसूचकं मन्वानाः नसोर्गन्धत्वादपि नासिकायां पूज्यबुद्धिमासेदुः। अत एव गन्धनशब्दः सूचनार्थे प्रायुज्यत

---

१. शंसय पशून्मे गोपाय। द्विपादो ये चतुष्पदः। (तै० ब्रा० १/२/१/२५) अत्र मुक्तकण्ठं पदद्वयधारी मनुष्यः पशुरूपेण प्रोक्तः।

लोके। गन्धेषु च मद्यगन्धः प्रकाममप्रीणयन्मनांसि मनुजानाम्। एवं च मद्यगन्धेन परं प्रीता प्राकृताः महक, महकना इत्यादि शब्दानाविरकार्षुः।[1]

तथापि नासिकाया सौन्दर्यस्य प्रमुखं कारणमिदमेव यत् प्रियेषु प्रियतमः, रोचिष्णुषु रोचिष्णुतमः इन्द्रियराजः राजेन्द्रो वा प्राणस्तत्र तिष्ठति।

अत एव सुष्ठु प्रार्थयते ऋषिः 'नसोर्मे प्राणोऽस्तु' इति।

---

1. द्रष्टव्यम्–A. Comparative Dictionary of the Indo-Aryan Languages—R. L. Turrer.

# अक्षणोर्मे चक्षुरस्तु

समस्ते जीवने सर्वेष्वपीन्द्रियेषु यशोबलं, दीप्तिं, कान्तिं चाधातुम् ऋषिः प्रार्थयते-अक्ष्णोर्मे चक्षुरस्तु, कर्णयोर्मे श्रोत्रमस्तु। एतदेवाभिप्रेत्य महता कण्ठेनाथर्ववेदे प्रोक्तम्—

**'वाङ्म आसन्नसोः प्राणः, चक्षुरक्ष्णोः, श्रोत्रं कर्णयोः। अपलिता केशा अशोणा दन्ता बहु बाह्वोर्बलम्' ॥........अथर्ववेदः १९।६०।१।**

एवं परां लालसां, परां भक्तिं धारयमाणेन ऋषिणा एवमुपागीयत—

**'पश्येम शरदः शतं, शृणुयाम शरदः शतं'.........**

'वयं वर्षाणां शतं पश्येम, वर्षाणां शतं च शृणुयाम' इति हि तस्यार्थः।

मन्त्रस्यान्ते तु अनया प्रार्थनया ऽसन्तुष्यतेव ऋषिणा एवमभ्यधीयत—

**'भूयश्च शरदः शतात्'**

'अतोऽप्यूर्ध्वं दर्शनशक्त्या, श्रवणशक्त्या च समन्विता वयं पश्येम च शृणुयाम च'।

वस्तुतस्सर्वमिदं प्रार्थनं नासीत् केवलं वाचां प्रचारः। यद् वाचाऽऽसीदभ्युदितं तज्जीवनेऽप्यासीत् परिलक्षितम्। संख्यातिगा जना कल्यतामुपेताश्चिरं वातं च जीवन्ति स्म। अक्ष्णोः चक्षुः कर्णयोश्च श्रोत्रम् अन्वर्थं प्रार्थयमानाः कान्तेन वपुषा जीवनं व्यतियन्ति स्म।

**किं नामाक्षि, किं चादः चक्षुः**—सामान्यतो जनाः 'द्वावपीमौ शब्दौ पर्यायवाचिनौ' इति मन्वानाः अक्षिशब्दस्यार्थे चक्षुः शब्दं, चक्षुः शब्दस्यार्थे चाक्षिशब्दं प्रयुंजते। परं यदि स्यादेवं तर्हि 'अक्ष्णोः चक्षुः' इति प्रार्थनं मुधा प्रोक्तं स्यात्। तदा को हि नाम जनः अक्ष्णोः चक्षुष्ट्वम् आपादयेत्! दार्शनिकसरण्या तु—को हि नाम महाबलः स्वस्कन्धे स्वस्कन्धमापादयेत्!!

तस्मादन्यदेवास्ति अक्षि, अन्यच्चास्ति चक्षुः। वस्तुतश्चक्षुरेवास्ति दर्शनसाधनम् अतीन्द्रियम् इन्द्रियम्। अक्षि तु केवलमस्ति तस्य चक्षुषो निवासस्थानम्। अक्षि त्वस्ति पात्र रूपं, यत्र चक्षुः समास्ते। 'पात्ररूपम् अक्षि' इति रूपायितं योगसूत्रभाष्यकारेण व्यासेन[1]।

एवं न कश्चन अक्षणा पश्यति, न च कोऽपि चक्षूरागेण समास्कन्दति। प्राकृताः जनास्तु अक्षणैव पश्यन्ति स्म !! अक्षिशब्दान्निर्मितम् 'आँखें देखती हैं' इति वाक्यमत्र निभाल्यताम्। वस्तुतस्तु आधाराधेयभेदम् अविविच्यमानानां जनानाम् आसीदक्षि चक्षुरेवेत्यभिमानः।

एवं 'पात्ररूपयोरक्षणोरनिन्द्रियगम्ये दर्शनसाधने चक्षुषी समासाताम्' इति हि 'अक्षणोर्मे चक्षुरस्तु' इति मन्त्रस्यार्थः। चक्षुषा सर्वमिदं जगद् दृश्यते। तस्याभावे तु सतोरप्यक्षणोः जगदिदं शून्यमिव। अत इदम् अस्ति दर्शनसाधनम्। अथ च न केनापीन्द्रियेण चक्षुः द्रष्टुं शक्यते, अत इदमनिन्द्रियगम्यम्[2]। स्वस्य चक्षुषो दर्शनं तु दूरमास्ताम्, परस्यापि चक्षुषो दर्शनं न विधातुं शक्यते। यतो हि चक्षुरिदं शक्तिरूपम्। पृथग्जनानां तु अक्षि दृष्ट्वा 'चक्षुर्मया दृष्टम्' इति भवत्यभिमानः। परं नेदं वस्तुतस्तथात्वं भजते।

कियदस्तीदं विडम्बनम्, कियती विचित्रा भूमिरेषा !!—यद्धि चक्षुः अणोरणीयसां, महतो महीयसां पदार्थानां द्रष्टा तन्न केनापि दृश्यते। एवं यन्न केनापीन्द्रियेण दृश्यते, येन तु सर्वमपि वस्तुजातं दृश्यते, तदेवेदानीमस्ति विचित्रं (न तु सचित्रं !!) चक्षुः। केनोपनिषदि यथा वर्णितं भगवतो माहात्म्यम्[3], न तावता किमपि न्यूनं चक्षुषो माहात्म्यम्।

काव्यशास्त्रेषु चक्षुषः सौन्दर्यम्—एवं नेत्रमिदं मुखस्य शोभा, अंगस्य प्रतिष्ठा, रूपस्य चास्त्युत्सवः। अंगेषु नयनयोः सौन्दर्यम् उपवर्णयन्

---

१. अक्षिपात्रकल्पो हि विद्वान्-योगसूत्रव्यासभाष्यम् २/१५।

२. 'शरीरसंयुक्तं ज्ञानकारणम् अतीन्द्रियम् (तर्कभाषा-प्रमेयनिरूपणम्) इत्येवं परिभाषमाणानां न्यायशास्त्रकाराणाम् इदमेव मतम्॥

३. यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥
—केनोपनिषद् १/६

कविः कृतार्थताम् उपयाति। 'कमललोचनम्', 'कमल नयनम्' इत्येवं बहुविधैः प्रयोगैरपि न कवीनां वागुपशाम्यति। परं परमरमणीयता तु आयतनयनयोर्विराजते। अत एवायतनयने सौन्दर्यस्य प्रतिमानरूपेण कविभिरुपास्थाप्येताम्।

बाणभट्टस्तु आयतनयने उपवर्णयन् परां काष्ठामवाप्नोत्। तन्मतानुसारेण नयनयोः प्रथिमा तत्र वर्तमानयोर्तारकयोश्च सौन्दर्यमासीदेवं यथा क्वचन दीर्घसरःसु कुमुदकुवलयकमलानि प्रफुल्लितानि स्युः[1]। कियती आयतता स्यादेवंविधयोर्नयनयोरिति सहृदयसंवादभाजः सुधियः विदांकुर्वन्तु!

अन्यस्य कवेर्मतानुसारेण तु नयने कर्णान्तिमायते भूत्वा सौन्दर्यस्य परां कोटिं भजेते स्म। तत्र कर्णपथमुपारूढे नयने कुरुक्षेत्ररूपेणोपमातुं शक्येते—

> अर्जुनः कृष्णसंयुक्तः कर्णं यत्रानुधावति।
> तन्नेत्रं तु कुरुक्षेत्रम् इति मुग्धे मृशामहे॥

**सर्वोऽप्यनुभवः चक्षुषा गृहीतः**—प्राचीनशब्दास्तु यथा ध्वनन्ति तथा नास्ति कोऽप्यनुभवः यदक्ष्णा चक्षुषा वा न गृहीतः स्यात्। तथा च घ्राणजरासनश्रोत्ररूपास्सर्वेऽप्यनुभवाः नयनयोरयनं गताः। अत एव ते सर्वेऽपि प्रत्यक्षशब्देनाभिहिताः। प्रत्यक्षशब्दे अक्षशब्दः मूलतो नयनार्थकः सन्नपि पश्चादिन्द्रियार्थतां गतः। अत्रैतदवधारणमेव कारणमिति प्रतीयते।

शब्दानां परिवर्तनपद्धतिरपि अर्थममुं प्रमाणयति। चक्षुः शब्दोऽयं चक्ष् धातोरुस् प्रत्ययेन निष्पाद्यते। चक्ष् धातुस्तु व्यक्तायां वाचीत्यर्थे धातुपाठे परिगण्यते। 'आचष्टे', 'आचष्टाम्' इत्यादयस्सन्ति सुबहवः प्रयोगाः चक्ष् धातोर्व्याख्यानार्थे प्रमाणम्। एवं व्याख्यानार्थकेन चक्ष् धातुना चक्षुः शब्दनिष्पत्त्या चक्षुषः वदनं परिज्ञायते। अस्य वदनं जिह्वायाः व्यापारम् अतिशेते। यस्मिन् भावप्रकाशने जिह्वायास्सामर्थ्यं

---

१. ·····चक्षुष प्रथिम्ना विकचकुमुदकुवलयकमलसरःसहस्रसंच्छादितदशदिशं शरदमिव प्रवर्तयन्तम्।

—हर्षचरितम्, प्रथम उच्छ्वासः।

परिहीयते तत्र चक्षुरेव प्रकाशते केवलम्। दुःखाम्भोधौ निमज्जनं वा, आनन्दस्य परा काष्ठा वा—किमन्यत् सकलं वदेत् ऋते चक्षुषः ?

अपि च चक्ष् धातू रसनार्थेऽप्यासीत् कदाचिदिति केश्चन प्रयोगैरनुमातुं शक्नुमः। चक्ष् धातुना निष्पन्नः 'चक्खइ' इति प्राकृतप्रयोगः, चखना इत्यादयश्च हिन्दी प्रयोगा रसनार्थे सम्प्रवर्तन्ते। पर्शियन भाषायां च 'चक्ष्' धातुप्रभवः 'चशीदन्' (Casidan) इति रसनार्थे प्रयोगो दृश्यते। अत एव चक्ष् धातोरासीत् कदाचन रसनार्थतेत्यनुमानस्यास्ति भूयानवकाशः। टर्नरमहोदयोऽपि प्रयोगममुं स्वीचकार[1]। मधुराम्ल-दर्शनमात्रेणैव जिह्वायां रसोत्पत्तिश्चक्षुषा रसनेन विना न संजाघटीति। साहित्य शास्त्रे नयनपात्रेण वपुषः सौन्दर्यं पीयते।[2]

यदि तु दर्शनशास्त्रमप्यनुमन्यतां भवान् तर्हि चक्षुषा घ्रायतेऽपि। न्यायदर्शने 'सुरभि चन्दनम्' इत्युदाहरणेषु ज्ञानलक्षणासन्निकर्षेण चक्षुषा घ्राणं भवतीति हि न्यायनेया पद्धतिः।[3]

एवं चक्षुषा दृश्यते च, उद्यते च, रस्यते च, घ्रायते चेति विजयतां चक्षुर्माहात्म्यम्। वस्तुतस्तु दर्शनमवबोधसामान्यार्थे सर्वदैव प्रतियुगं प्रयुज्यते स्म। अत एव 'नृपतिः सन्निति वाच्यदर्शनात्' इत्यत्रावबोधार्थकः 'दर्शन' प्रयोगो रघुवंशे संगच्छते। प्राकृतादिभाषायां च 'मैं देखूँगा' आदि प्रयोगा अवबोधेन नातिभिन्नाः। एवं सर्वेषामपि ज्ञानेन्द्रियाणां प्रतिनिधिभूतं चक्षुरिति सिद्धं भवति।

एवं सर्वेषामपि जनानां कृते प्रष्ठाय, प्रेष्ठाय च चक्षुषे सत्यमिदमुक्तम्—'अक्ष्णोर्मे चक्षुरस्तु' इति।

---

१. A Comparative Dictionary of the Indo-Aryan languages—नामके कोशे चक्षति प्रयोगो रसनार्थे स्वीकृतः।

२. नयनपात्रपेयं वपुः—अविमारकम्।

३. ज्ञानलक्षणाया अस्वीकारे 'सुरभि चन्दनम्' इति ज्ञाने सौरभस्य भानं कथं स्यात्—

—मुक्तावली, प्रत्यक्ष खण्डम्।

# अस्तितान्मा अमृतं गमय

आम्रो वृक्ष, आम्रं फलं मूलतो भारते देशेऽवततार इत्यत्र सन्ति बहूनि प्रमाणानि। अस्य वृक्षस्य कृते इंग्लिशभाषायां पारिभाषिकः शब्दः Mangifera Indica अस्य भारतभवनम् अवद्योतयति। इंग्लिश-भाषायामेवास्यार्थे Mango शब्दः प्रयुज्यते। शब्दोऽयं मूलतः 'पोर्चुगीज' भाषायाः Mang शब्दात् विकासमाप। 'पोर्चुगीज' भाषायां च शब्दोऽयं तमिलभाषायाः 'मान्काय्' शब्दाद् गृहीतः। तत्र 'मान्' शब्दस्यार्थ आम्रवृक्षः 'काय्' शब्दश्च फलार्थे प्रसिद्धः। एवम् 'मान्काय्' शब्द 'आम्रफलम्' इत्यर्थे प्रयुज्यते। स्पष्टतः तमिलभाषातः प्रसूतोऽयं शब्दश्च शब्दार्थश्च पोर्चुगीज देशयात्रां कुर्वाण इंग्लैंडदेशं प्राप्तः।

यथा त्वितिहासविदो भणन्ति तथा सर्वप्रथमं 'ह्वें सांग्' नामधेयो यायावरोऽदसीयं वृक्षं बहिर्भारतदेशं प्रचचार। पश्चात्तु मुगलसम्राजः सुतरां जुषमाणाः, सुतमां च प्रीयमाणाः वृक्षममुं समेधयामासुः। श्रूयते यदकबरसम्राट् दरभंगानगरोपकण्ठं लक्षपरिमितान् आम्रवृक्षान् आरोपयामास। तदा प्रभृति वृक्षोऽयं विष्वक् प्रचचार।

**आम्रस्य प्राचीनं निदर्शनम्**—भारते देशे त्वतिप्राचीनकालात् अस्य वृक्षस्यास्तित्वस्य प्रमाणानि समुपलभ्यन्ते। शतपथब्राह्मणे 'जनः संसारबन्धनात् प्रमुच्य मोक्षमुपयाति' इति सिद्धये आम्रफलम् उपमान-रूपेण प्रास्तूयत। (यथाऽऽम्रं बन्धनात् प्रमुच्यते एवमेवायं शारोर—श० ब्रा० १४.७.१.४१)। पाणिनिरपि विभिन्नेषु भूभागेषु बंहिष्ठमाम्रभावं दृष्ट्वा 'आम्रवणम्'[1] इति स्वीचकार।

**साहित्यग्रन्थेष्वाम्रम्**—परवर्तियुगे तु कविभिराम्रवृक्षोऽयं न कदापि व्यस्मर्यत। अस्याव्याजमनोहरं रूपम्, अभ्रंलिहाः विटपाः, सुलभा निद्राक्षमा घना च छाया—सर्वमेतन् मनुजानां मनांसि आकर्षयतीव,

---

१. आम्रवणम् इति शब्दस्यास्तित्वसिद्धये पाणिनिना 'प्रनिरन्तः शरेक्षु' (पा० सू० ८।४।५) सूत्रे विशेषतो विधान कृतम्।

पान्थमाह्वयतीव। एवम् आम्रं फलं मदयति च मोदयति च, नन्दयति च वन्दयति च सर्वं लोकमिति विजयताम् आम्रमाहात्म्यम् ! अध्वखेदापहृतः पथिकस्तस्य शरणे कृतार्थः सन् सरसरुचिरं गायत्येवम्—

शान्ता घर्मकणाः श्रमः शिथिलितस्तीर्णस्तृषामुद्गमः।
वारं वारमुदार-कोकिलरवैरानन्दितं मानसम्॥

भ्रमद्भ्रमरकुलव्याकुलम् आम्रमुकुलं तु संख्यातिगान् यूनः प्रकामं प्रमोदं प्रापयत्। मुकुलमुद्दिश्य युवतयः प्रवदन्ति स्मैवम्—अमुना (मुकारविरहितेन) कुलेन पूर्णसुशोभितेनापि नास्ति न प्रयोजनम्। अतः कामदेवस्य पंचबाणेष्वन्यतममिदं मुकुलम्—

कति पल्लविता न पुष्पिता वा
तरवः सन्ति समन्ततो वसन्ते।
जगतीविजये तु पुष्पकेतोः
सहकारी सहकार एक एव॥

व्यतीतं वर्षाद् वर्षान्तरं, युगाच्च युगान्तरं, परमद्यापीदं मुकुलं यूनः मनांसि प्रकाममाकृषति हिन्दीभाषायां 'बौराता है' इति शब्दः मुकुलशब्दादेव मुकुल > मौर < बौर इति सरण्या नामधातु रूपेण विकासविधिना निष्पन्नः।

**अम्रितादमृतान्ता यात्रा**—आम्रं फलं सदा चैवं प्रियंभावुकतामगात्। परम् इदमप्यस्ति तथ्यं यत् प्राचीने युगे आम्रे प्रीतिः आम्ल्यवशादासीत्। तथ्येऽस्मिन् 'आम्र' शब्द एव प्रमाणम्। शब्दोऽयम् अम्लशब्दान्नातिभिन्नो रलयोरभेदात्। अतः पूर्वं फलमिदम् आम्ल्यस्य प्रतिमानं भूत्वा भुवि परिवृढः। कथं भवत्याम्ल्यम् इति पृच्छायां यथा भवत्याम्रम्—एवं प्राश्नप्रतिवचनिका संवर्तते स्म। इदानीमपि आम्रचूर्णम् (हिन्दी-अमचूर) अम्लतायै एव प्रसिद्धं लोके। न्यायशास्त्रेऽपि अम्लः रस एवं प्रकारक एव परिगण्यते। आमलकं फलमपि अम्लं भवतीति बुद्धिरासीत्—एतत् शब्दनिष्पत्त्यावगम्यते। यद्यपि परवर्तिदर्शनशास्त्रेषु कषायरसे इदं परिगण्यते। एवम् आम्रं फलं पूर्वमासीद् अम्रितम् इत्यधिशब्दप्रमाणं वयं मन्महे।

अम्रितमिदं भवेदमृतमिति प्रतीक्षायां सुबहु कालो व्यतीयाय। यावति काले गाङ्गं जलं समुद्रमापूरयितुं क्षमते तावानेव कालो व्यतीतोऽनु-

मानतोऽस्य विकासविस्तारे। अद्यतनीनवस्तुनिर्माणे कियद्धनं, कियान् कालो व्यतीत इत्यस्यास्तीदं लघुतरं निदर्शनम्। स्वसंकल्पसाधने येषां नासीत् कदाचिद् विधुरं धैर्यं, न कदापि परिहीणा धिषणा, सत्यम्-अह्नोति तेषां यश। फलानां संकरविधिना विविधफलप्रजातिनिर्माणा-नन्तरमेव अमृतं वा मधुरं फलं भोक्तुमपारयदसौ मनुजः। इदानीं लोके परमाशास्यं 'दशहरी' आम्रं फलं, 'लंगड़ा' आम्रं फलम्, अस्यैव विकासस्य फलम्।

**अमरूदफलमप्यमृतप्रभवम्**—अमरीकादेशस्थितात् 'पेरु' स्थानात् समागतम् 'अमरूद' नामधेयं फलं तु पूर्वमेवासीद् अमृतम्। पेरुतः समायातत्वात् अद्यापि महाराष्ट्रीया 'पेरु फलम्' इति ब्रुवते। अन्यत्र तु फलमिदम् 'अमृतम्' इति रूपेण समाकार्यते। तदेवेदानीं विकाससरण्या 'अमरूद' इति नामधेयेन प्रोच्यते।

**मधुनो माधुर्याद् आमिष्टान्नमाधुर्यं क्रमणम्**—माधुर्यं तु सर्वप्रथमं मधुना परिज्ञातमिति 'मधुर' शब्देन वयं प्रतीमः। पश्चात्तु सर्वेष्वपि सुन्दरेषु वस्तुषु माधुर्यं प्रासरत्। नासीज्जगति किंचन सुन्दरं यन्मधुरं न स्यात्। दृश्यं वा स्यात्, श्रव्यं वा, स्पृश्यं वा—सर्वत्र माधुर्यं समवेतम्। 'अहो मधुरमासां दर्शनम्', 'अहो मधुरालापजनितविस्रम्भः'—इत्यस्ति कविवीक्षितो विस्मयः। साम्प्रतं कन्यासु लावण्यमपि दृश्यते माधुर्यमपि। 'कथं लवणस्य वा मधुरस्य वा भावः द्रष्टुं शक्यते' इति दार्शनिको न हि, साहित्यकारोऽयं तावत् प्रष्टव्यः। दर्शनशास्त्रकारः कामं विरौतु यन्मधुना निर्मितं वस्तु स्वाद्यत एव केवलं, न तु दृश्यते, श्रूयते वा, परं समाजनदीवेगस्तु न तमनुयाति, नवं पन्थानं चाविष्कुरुते। एवम्—

आम्रं मधुरं, मुकुलं मधुरं मधुरे मासे ह्यखिलं मधुरम्।

साम्प्रतं सर्वाणि मिष्टान्नानि 'मधुर' शब्देन प्रोच्यन्ते। परं क्व मधुनो माधुर्यं, क्व चाद्यतनीनमिष्टान्नानाम्? मधुनो माधुर्यात् प्रचलितो मानवः महता यत्नेन महता च कालेन अद्यतनीनमिष्टान्नानां माधुर्यम् उपेयिवान्। एवम् अम्रितादमृतान्ता यात्राऽपि महत्कौशलेन प्रवृत्ता।

अमृतं मधुरं च परां काष्ठां प्रापयमाणा धियो भवन्तु प्रीतये, शंयु चाभिस्रवन्तु न इत्येवं परमाशास्महे।

# पुंस्कोकिलो वै मधुरं चुकूज

व्यतीतं वर्षाद् वर्षान्तरं, युगाच्च युगान्तरं, प्रवाहितं समुद्रपरिमितं गांगं जलं, तथापि पुंस्कोकिलोऽयं तथैव रौति, तथैव कूजति, तथैव रंजयति -मनांसि मनुजानाम्। तथापि अस्य सहस्रशा रवणमपि, लक्षशः कूजनमपि न भवति कदापि पुनरुक्तमिति कथं न चित्रम्! महाकविः माघः सौन्दर्यम् एवं पर्यभाषत-यत् क्षणे क्षणे नवतामुपैति तदेव सौन्दर्यस्य रूपम्[1]। अस्य प्रत्येकं कूजनं किमप्यसाधारणं यथा स्यात्तथा सम्पद्यते। सरस-विशदो कविरस्य प्रत्येकं रवणे किमप्यनितरसाधारणतां प्राप्नोति। अतो भवत्येतत् सौन्दर्यस्य रूपम्।

**प्राप्ते मोहमये वसन्तसमये किं भाषते कोकिलः**—परं कोकिलोऽयं वारं वारं कूजनेन किं वक्तुं कामयते? सम्भाव्यन्तेऽत्र बहवः प्रवादाः कवीनाम्। यथा त्वाधुनिकाः प्राणिवैज्ञानिकाः भणन्ति तथास्य कूजनमस्ति प्रणयनिवेदनं कोकिलानां कृते। कोकिलोऽयं भणति कोकिलां यदस्त्यत्र कोऽपि प्रेष्ठः प्रणयाय। इयमस्ति प्रकृतिर्विचित्रा यत् प्रणयनिवेदने प्राथम्यं पुमधीनमेव। कोकिलः कूजति, कोकिला तमनुसरति। मयूरः नृत्यति, मयूरी तमनुसरति। कोकिलोऽसौ यथा सा नन्दति, यथा सा मुह्यति, यथा सा मोदते तथैव करोति, तथैव कूजति। अयं हि वदतीव यदागच्छ त्वम्, आवां पुनर्ददता घ्नता जानता संगमेवहि[2]।

एवं कूजति कोकिलः। परं लौकिकानान्तु परम्परीणा मतिरियं यत् कोकिला कूजति। महाकविः कालिदासः शूर्पणखां प्रथमं कोकिलमांजु वादिनी ब्रवीति[3]। हिन्दीभाषायां तु कोकिलैव कूजति निरपवादम्। तत्र

---

१. क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः—शिशुपालवधम्।

२. अत्र 'पुनर्ददता घ्नता जानता संगमेमहि' इति वेदमन्त्रस्य छाया द्रष्टव्या।

३. लक्ष्मणः प्रथमं श्रुत्वा कोकिलामंजुवादिनीम्।
शिवाघोरस्वनां पश्चाद् बुबुधे विकृतेति ताम्। रघुवंशम् १२।३९

'कोयल बोलती है' इत्येवं वाक्यं प्रयुज्यते। तत्र 'कोयल' शब्दः पुल्लिंगोऽपि सन् स्त्रीत्वं भजते 'कोयला' शब्दानुरोधात्! यथा संस्कृते 'देवता' शब्दः स्त्रीलिंगोऽपि सन् पुंस्त्वं भजते देव्यनुरोधात्!! परं कोकिलकूजनप्रसंगे आस्तां तावदेषा शब्दान्वेषणपद्धतिः।

**कोकिलकूजने आकर्षणम्**—कोकिलकुलकूजनमिदं प्रतियुगं निकामं जनानाकृक्षत्। कवयोऽपि कोमलकान्तपदावलीभिरिदं वर्णयामासुः। भारतीयेतिहासस्य प्राचीनतमे साक्षिणि यजुर्वेदेऽपि 'कामाय पिकः' [यजु. २४।३९] इत्येवं वर्णनमुपलभ्यते। एवं समयेऽपि तस्मिन् कोकिलकूजनं भृशमानन्दयत् जनानिति प्रतीयते।

लिखितेतिहासात् पूर्वं प्रागैतिहासिकयुगेऽपि कोकिलकूजनं परमरमणीयतां चकार इति शब्दसाक्षिकेन वर्णनेन ज्ञायते। यतः कोकिलशब्दोऽयं तस्य रवानुकरणद्वारा विनिर्मितः। भाषाविदः भणन्ति यत् अनुकरणशब्दा इमे सर्वप्राचीनाः। यदा काकः स्वकार्कश्याय प्रसिद्धः शब्दानुकरणेन लोकेऽस्तितां प्राप्तः,[1] तदैव कोकिलोऽपि स्वमाधुर्याय प्रसिद्धः शब्दानुकरणविधिनैव भुवि परिवृढः।

उल्लेखनीयमिदं यत् आंग्लभाषायां 'Cuckoo' शब्दोऽपि तथैवानुकरणविधिना लोकमभ्युपगतः। किं नास्तीदं चित्रं यत् कोकिलकूजनमिदं महान्तं देशम् अपरिमितं च कालं स्वस्मिन् समाविशति। आधुनिके युगे बहुभिर्यन्त्रैः लघूकृतं देशकालयोः प्रमाणमिति प्रोच्यते। किं नैतत् कृतम् अनेन पक्षिवराकेण!! वेदान्तशास्त्रे सोऽस्ति आनन्दमयकोशः यत्र मायाकृतास्सर्वेऽपि भेदा उपशाम्यन्ति। साहित्यशास्त्रे तु कोकिलोऽयमानन्दमयकोशः—यत्र सर्वेऽपि जनाः विस्मरन्ति देशं, विस्मरन्ति वर्गम्। सर्वेऽपि समं नन्दन्ति, अथ च नन्दन्त्येव केवलम्। अस्मिन् नन्दनप्रसंगे अपियन्ति केऽपि भाषाभेदाः, अपासते केऽपि वर्गसम्प्रयुक्ताः भीरुभावाः।

**कान्ताहर्षसमन्वितः शुभगुणः कोकूयते कोकिलः**—एवं कोकिलः प्रतियुगमकरोत् प्रणयनिवेदनं, संख्यातिगाँश्च पुरुषान् प्रैरयत् तथा निवेदनाय। अद्याप्ययं तथैव कोकूयते। 'कोकूयते' शब्दोऽयं वारं वारं

---

१. काक इति शब्दानुकृतिः भाषायाम्—निरुक्तम्।

कूजनार्थे 'कु' धातोर्यङन्ते निष्पाद्यते। यथा तु चिकीर्षति इत्यादीनि अन्यान्युदाहरणानि भणन्ति तथात्वत्र 'चोकूयते' इति रूपेण भाव्यम्। परं पाणिनिराचार्योऽत्र विशेषेण सूत्रेण श्चुत्वं परिवर्जयन् 'कोकूयते' इति रूपं साधयामास[१]। अत्र श्चुत्वं न भवति, किमत्र कारणम्? एतदेव यत् कोकिलोऽयं 'कू कू' इत्येवं रौति, न तु 'चू कू' इति !! रसिका जनाः प्रतियुगं 'कू कू' इति विरावं शृण्वन्तः कोकिल इति शब्दं, 'कोकूयते' इति रूपञ्चान्वकार्षुः। पाणिनिराचार्यस्तु तानेवानुगच्छन् 'कोकूयते' इति रूपमन्वशात्। व्याकरणं तथैवादिशति यथा लोकः समीहते। महाभाष्य-मुखेन तु न हीदं शास्त्रं लोकाद् भिद्यते'।

परं कतिपये वैयाकरणाः शब्दसिद्ध्येकधनाः अर्थमुपेक्षमाणाः 'कोकूयते उष्ट्रः, 'कोकूयते खर' इति वर्णयामासुः[२]। किं कथयामोऽर्थं प्रति निमीलित-चक्षुर्भ्यस्सूरिभ्यः !! क्व कोकिलस्य कूजनं, क्व खरस्य प्रखरः शब्दः? अस्त्यत्र किमपि साम्यमिति पाठकैर्निर्णीयताम्।

**अस्य नामान्तराणि**—अस्य सन्त्यन्यान्यपि नामानि। परमुल्लेखनीयं तु परभृदेव। इदं नामधेयमस्यैकं वैशिष्ट्यं द्योतयति। कोकिला इमा अण्ड-प्रजननानन्तरं तमण्डं काकादिकानां कुलायेषु स्थापयन्ति। काकादयस्तु अण्डानां वर्णसाम्यात् काकपिकाण्डागृहीतभेदाः सर्वानपि निर्विशेषं पालयन्ति। कतिपयेभ्यो दिनेभ्योऽनन्तरं तस्मादण्डात् पक्षिशावकः प्रजायते। काकस्तु यावत्तं पिकशावकरूपेणावगच्छति तावदेव उड्डीयते कोकिलः। एवं परेषु कुलायेषु भरणादियं परभृदिति प्रोच्यते स्म।

वैशिष्ट्यमस्याः प्राचीनकालादेव जनाः जानन्ति स्म। अतश्च शाकुन्तले स्त्रीणाम् अशिक्षितपटुत्वमुक्तम्[३]। स्त्रीपक्षिष्वपि पाटवं दृश्यते, किमुत मानवीषु स्त्रीषु॥

---

१. न कवतेर्यङि (पा. सू. ७।४।६३)

२. तत्रैव सूत्रे काशिकादयः।

३. स्त्रीणामशिक्षितपटुत्वममानुषीणां सन्दृश्यते किमुत या प्रतिबोधवत्यः। प्रागन्तरिक्षगमनात् स्वमपत्यजातं अन्यैर्द्विजैः परभृतः खलु पोषयन्ति।
अभिज्ञानशाकुन्तलम् ५।११

मया श्रुतमेकत्र यत् काकोऽपि कृष्णः, पिकोऽपि। परं वसन्तसमये तयोर्वाग्भ्यां द्वावपि विविच्येते—

प्राप्ते वसन्तसमये काकः काकः पिकः पिकः।

परमिदानीमस्ति संशयः–किमस्माभिः पिकस्य वाक् प्रशस्यताम् कार्यं वा विनिन्द्यताम्[1]। कोकिलकुलकूजनैः प्रतियुगं परं प्रीयमाणास्तु पुरुषाः वाचमेव परं प्रशंसन्ति। वाग्व्यासक्तमनसां येषां कोकिलस्य कूजनेन हृष्टं लोमभिः तेषां कथमस्ति कार्यंविवेचनावकाशः !!

पंचकन्याः स्मरेन्नित्यम् !!

एवं हि श्रूयते आह्निकसूत्रावल्याम्—'अहल्या मन्दोदरी तारा कुंती द्रौपदी तथा। पंचकन्या स्मरेन्नित्यं महापातकनाशनम्'। परं हन्त भो ! एतास्तु सर्वा अपि विवाहिताः। कथमेतास्सन्ति पंचकन्याः ?

विरोधपरिहारस्तु भ्रान्तिलेखने समाविष्टः। पूर्वमासीत् पाठ एवम्—पंचकं ना स्मरेन्नित्यम्...... । ना=पुरुषः पंचापि स्त्रियः नित्यं स्मरेदिति हि तदर्थः। इदानीं तु पंचकन्यास्स्मर्यन्ते इति दूरमारोप्य पातिताः वयम् !!

---

१. तवैतद् वाचि माधुर्यं जाने कोकिल कृत्रिमम्।
प्रपोषितो यैस्तानेव जातपक्षो जहासि यत् ॥—भोजदेवः।

# किं देवेन निर्मितं किं च मनुष्येण

गुरुः— वत्स, यद्यपि देवोऽस्ति महाप्रभावः परं मनुष्योऽपि न मनागपि नैयून्यमावहति। देवेन यन्निर्मितं ततोऽप्यूर्ध्वं निर्मितमनेन प्रभविष्णुना मनुजेन।

शिष्यः— विस्मापनीयमिदमत्र भवतां वचनम्। निदर्शनपूर्वमध्यापयन्तु तत्र भवन्तः यत् किं देवेन निर्मितं, किं च महाप्रभावं धारयता मनुजेन।

गुरुः— सावधानमनाः शृणु भोः, गोप्यमिदं वचः। पञ्चकं देवेन निर्मितम्, प्रपञ्चस्तु मनुष्येण। देवो हि पृथिव्यप्तेजोवाय्वाकाशरूपाणि भूतानि निरमिमीत। मनुजस्तु ततोऽप्यूर्ध्वं प्रपञ्चं निर्मितवानिति नेदं तस्य प्रभावं ख्यापयति किम्? प्रपञ्चोऽयं पञ्चभूतेभ्योऽप्यधिक इति द्योतयितुमत्र 'प्र' इत्युपसर्गः प्रयुक्तः।

शिष्यः— संशयोच्छेदीदं गुरोर्वचनम्। अन्यत् किम्?

गुरुः— अलकं देवेन, अलीकं मनुष्येण। केशवो हि भगवान् नाम्नोऽन्वर्थतां भजन् केशम् अलकं वा प्रति स्पृहयालुः स्यात्तर्हि न त्वयाऽऽश्चर्यान्वितेन भाव्यम्[1]। अपि च 'अलक' शब्द एव वेदे प्रोक्तो नालीक इत्यतोऽपि अलकं देवेन निर्मितम्[2]। परं नक्तन्दिवमलीकं जुषमाणेन मनुष्येणालीकं निर्मितमिति किमत्र चित्रम्!!

---

१. केशाद्वोऽन्यतरस्याम् (पा० सू० ५, २, १०९) इति सूत्रेण 'केशाः सन्ति अस्य' इति विग्रहेण 'केशव' शब्दस्य सिद्धेः।

२. वेदे अलक शब्द एव दृश्यते नालीकः। दृश्यताम्—'यदीं शृणोत्यलकं शृणोति'—अथर्ववेदः।

शिष्यः— अद्य तावदनुरहसम् उद्घाट्यते मनुजवृन्दवन्दनीयैर्गुरुभिः। अन्यद् उच्यतां श्रीमद्भिः।

गुरुः— रसना देवेन, वदना तु मनुष्येण। देवेन रसग्रहणाय जिह्वारूपेण रसनैव विनिर्मिता। अत एव ज्ञानेन्द्रियाणां मध्ये तस्याः गणना वर्तते। परं नास्ति देवप्रभवा वाक्। रचनाचतुरो देवो हि दर्शनाय, श्रवणाय, घ्राणाय च द्वे चक्षुषी, द्वे श्रोत्रे द्वे नासापुटे च व्यधत्त[1]। परं कथमियम् एकैव जिह्वा? न कदापि सकलकलावता देवेनान्यायकारिणा भाव्यम्। अतो मन्ये यत् द्विजिह्वतैव न्यायनेया पद्धतिः!!

परं जिह्वायाः कार्यद्वयं (रसनं वदनञ्च) न कदापि समीचीनम्। अन्येषूदाहरणेषु प्रतीन्द्रियमेकैकस्मिन्नेव कार्ये संसजनं दृष्ट्वा जिह्वायां कार्यद्वयं न संजाघटीति। अतो वदनं मनुष्येण निर्मितमित्येष एव न्यायसम्मतो मार्गः। भाषावैज्ञानिका अपि मन्वते यत् जिह्वाया रसनमेव प्रमुखं, मौलिकञ्च कार्यम्। वदनन्तु पश्चात्तनं मनुजमेधया विनिर्मितम्। वदनक्रियेयं जिह्वया मुखस्थानेषु वायुं रोधयित्वा सम्पाद्यते। परं रोधनेषु निष्पीडनादिकार्येषु च मनुजानां प्रज्ञामेधे वर्धमाने भवतः। नात्र देवः किमपि कुरुते।[2]

यदीदानीमपि वदनं देववदत्तं मनुतां भवान् तदा त्वंगुलिनिष्पीडनेन प्रवर्तमानास्वक्षरा (चुटकी) शब्देषु सत्सु अंगुलीनामपीन्द्रियत्वमापद्येत। यदि घर्षणपूर्विका शब्दनिष्पादिका जिह्वाऽपि इन्द्रियन्तर्हि घर्षणानुरोधेनैवाक्षरा (चुटकी)-प्रवर्तिकाया अंगुलेः कथं न स्यादिन्द्रियत्वम्? प्रसार्यतामत्रार्थे बौद्धग्रन्थोऽभिधर्मकोशः—

---

१. 'नसोर्मे प्राणोऽस्तु' इत्यादिकैर्मन्त्रैः ऋषयः द्विवचनयोर्नसोः प्राणान् कामयन्ते।

२. यथा ह्यंगुल्यादयः मूलतो वस्तुग्रहणाय विनिर्मिताः। परं विकासदशायां यदा मेधातपसी वृद्धिमुपयाते तदा तबलावादनायापि ता उपयुज्यन्ते। एवं घोषतन्त्रीनामधेयायाः मूलतो भारोत्थापने सहायप्रदानम्; जिह्वायाश्च मूलतो रसग्रहणं प्रयोजनम्। वायुरोधपूर्वकं वदनन्तु जिह्वायाः पश्चात्तनं कार्यमिति संगिरन्ते नवविकासवादिनो भाषाविदः।

"वाचस्तु नेन्द्रियत्वम्, वचने शिक्षापेक्षत्वात्..........कण्ठदन्ताक्षि-वर्त्मांगुलिपर्वणामपि चाभ्यवहरण-चर्वणोन्मेषनिमेषाकुञ्चनविकासक्रिया-स्विन्द्रियत्वं प्रसज्येत..........इत्ययुक्तं वागादीनामिन्द्रियत्वम्" —

(अभिधर्मकोश इन्द्रियस्थानम्)

अत्रोक्तमर्थं यथावद् ध्याहि मे शिष्य ! यदि वाग्व्यवरोधक्रियामात्रेणैव जिह्वाया इन्द्रियत्वं स्यात्तर्हि कण्ठस्याभ्यवहरणे, दन्तस्य च चर्वणक्रियायां सत्यां कथं न स्यात्तयोरिन्द्रियत्वम् ? एवं 'वदना देवेन निर्मिता' इति परम्परीणां मतिं दधानाः परास्ताः !!

शिष्यः— अहो गुरुपदाब्जसेवनं वर्धते साम्प्रतम्। गुरो ! यदि भवान्नावतीर्यात्तर्हि क इमामसाधारणीं वाचं श्रावयेत् ! सर्वथा शृणोम्यहं भवतामश्रुतपूर्वं वचनम्। अन्यद् देवमनुजौ कथं स्वस्वकार्यं विविनक्तः ?

गुरुः— अन्यदपि शृणु भोः एकाग्रचित्तया धिया। सूनरी देवेन निर्मिता, सुन्दरी तु मनुष्येण। इदमस्त्यत्र कारणम्। कमनीयायाः कान्तायाः कृते 'सूनरी' शब्द एव वेदे प्रोक्तः, न सुन्दरी शब्दः यथा—'आ घा योषेव सूनरी' इत्यादयो मन्त्रा अस्मिन्नर्थे प्रमाणम्।[1] परं मनुजस्तु तां कान्तां सुन्दरीं निरमिमीत ! परवर्तिग्रन्थेष्वेवास्य शब्दस्य प्राप्तेः। सुन्दरीयं तथा मोदयामास मानसं, तथा नन्दयामास चित्तं, तथा कम्पयामास हृत्तन्त्रीं यत् सर्वेऽप्यादेवमानुषं तां सुन्दरीरूपेणोदजूघुषन्, सूनरीं च व्यस्मार्षुः। असाधुशब्दप्रयोगस्यापि नाभूदत्र कदापि परिदेवना, असाधुशब्दोच्चारणेभ्यः धृतलगुडहस्तानां वैयाकरणानामिति ह्यस्ति सुन्दरीमाहात्म्यम् !!! एवं वक्तुं पारयामो वयं यत् सूनरी निर्मिता देवेन, सुन्दरी तु मनुजेन।

शिष्यः— अहो ग्रन्थग्रन्थिच्छेदीदं गुरोर्वचनम्। कथमिदं लोके तान्तं ध्वान्तं हठाद्धिनस्ति भवान् !! इदानीमन्यदुदाह्रियताम्।

---

१. आ घा योषेव सूनर्युषा याति प्रभुञ्जती।　　　—ऋ० १. ४८. ५.

गुरुः— माता देवेन, जामाता च मनुष्येण। सर्वसुखदायिनीं मातरं देवः प्रदत्ते। न तत्रास्ति मनुजस्य व्यापारः। परं जामातारं तु निःशेषविश्राणितकोशजातेन, सर्वसम्पत्त्युपहारप्रकल्पनेन च, यथा स प्रमोदते, यथा स प्रसीदति, यथा च स ईष्टे सर्वेषु तथा करणेन मनुज एव निर्मिमीते जामातरम्। अद्यत्वे वीथिषु क्रय्योऽनड्वानिव स क्रीयते, मड्डुक-झर्झरवाद्यवृन्द-व्याजेनोद्घोष्यते च तस्य क्रयणं, निर्मीयते च जामाता इत्येवास्तीदानीं कलिचरणपद्धतिः।

शिष्यः— सत्यम्, सत्यम्! इदानीन्तु तथाकथितं लोकम्पृणं व्यवहारं समाचष्टे मे गुरुः। भवतां वचांसि नूनमुदमीलयन्मे चक्षुषी। अशेषा धन्यवादा देवमनुष्यविवेकिभ्यो गुरुभ्यः।

---

**कथं चमेली ?**

प्रश्नः—ननु चमेली शब्दः कथमस्तितामुपयातः ?

उत्तरम्—लेखकेन लिखितम्-कुथः च मल्लिका च। तत्तु पाठकेन पठितम्-कुथः चमल्लिका च। अस्मादेव भ्रान्तपाठात् चमल्लिकाशब्दात् चमेलीशब्दः विकासमाप।

# जडदेवो वा मूलदेवो वा

श्रुता बहुधा श्रीमद्भिः कथा इन्द्रवरुणादीनां देवानां वेदेषु पुराणेषु च। परमद्य प्रायशोऽश्रुतपूर्वां जडदेवस्य मूलदेवस्य च कथां विवरीतुमुपक्रमते मे हृदयम्।

**मूलदेवस्य विवरणम्**—ऋग्वेदे मूरस्य, मूरदेवस्य च वर्णनं बहुत्रोपलभ्यते।[१] सर्वत्रैव मूरशब्दः मूर्खार्थकः, मूढार्थको वेति सायणाचार्यः।[२] मन्ये मूर्खशब्दः मूरशब्दादेव विकासं प्राप्तः। अत इमं मूरदेवं मूर्खदेवरूपेणापि वक्तुं पारया वयम्। प्राकृते तु मूरदेवशब्दोऽयं मूलदेवरूपेण विकासमाप। मिश्रितप्राकृते मूलदेवस्यैका विचित्रा कथोपलभ्यते।

परं कथमयं देवः मूर्खोऽपि स्याद् देवोऽपि ? नैतच्चित्रीयितं स्यात् साधुशब्दविरजीकृतमनस्केभ्यस्सूरिभ्यः। यत्र वामाचारविधिप्रवर्तकाः वामदेवाः, तेषां गानमपि वामदेव्यरूपेण प्रख्यातुमर्हति लोके तत्र का कथा जडदेवानां मूलदेवानां च। लोके सन्ति देवाः शास्त्राण्यधीत्यापि मूर्खाः, मूर्खाश्च देवाभिनयशालिनः।

**जडदेवस्य विवरणम्**—सांख्यदर्शनमेकत्र जडभरतस्य कथां निकामं व्याचष्टे।[3] तत्र प्रोक्तो देवः जडदेवरूपेण ग्रहीतुं शक्यः। यतो हि सः जाड्यमपि ख्यापयति स्म देवत्वमपि।

**किं जलमिदं जडरूपेण संज्ञायताम्**—कतिपये भाषावैज्ञानिकाः 'डलयोरभेदः' इति वचनमनुरुन्धानाः जलं जडशब्देन समीकुर्वन्ति।[४]

---

१. आ जिह्वया मूरदेवान् रभस्व (ऋ० १०/८७/२)।

२. मूरा अमूर न वयं चिकित्वो (ऋ० १०/४/४)
इत्यत्र हे अमूर=अमूढ, मूराः=मूढा इति सायणाचार्यः।

३. असाधनानुचिन्तनं बन्धाय भरतवत्-सांख्यसूत्रम् ४/८।

४. अत्र Hybrid Buddhist English Dictionary, ग्रन्थस्थः जलशब्दः प्रमाणम्।

अत्रास्ति वस्तुतो विरोधियणः सम्प्रसारणम्।[1] क्व जडस्य स्थेमा, क्व जलस्य चांचल्यम्? किं प्रतिक्षणं प्रवहतो जलस्य जाड्यम्? हन्त भोः, केनैतच्छ्रुतिपथदूषणं कृतं मे!! कथमूर्मिसंक्षोदसम्प्लुतं जलं जडरूपेण प्रत्यज्ञासिषुः देवाः।

**किं वृक्षमूलमिदं मूढरूपेण संज्ञायताम्**—अपरे भाषावैज्ञानिकास्तु 'रलयोरभेद' इति वचनमनुरुन्धानाः मूलं मूरशब्देन मूढशब्देन वा समीकुर्वन्ति।[2] अस्यां दशायां वृक्षमूलमिदं मूढतया नातिभिद्यते। जडशब्दोऽपि वृक्षमूलार्थे मौर्ख्ये चापि प्रयुज्यते। अतः प्रश्नस्यास्य वर्तते भूयानवकाशः किं वृक्षमूलमिदं मूढरूपेण सर्वथाऽस्माभिः संज्ञायताम्?

**अहो मौलिकोऽयं प्रबन्धः**—शब्दचित्रस्येयं विचित्रा कथा नाद्यापि समाप्तिमेति। मूलं त्वस्ति मूढः, परं तथा भारभूतं मूलं हरत्यावहति वा यः प्रबन्धः स तु वैदुष्यस्य पराकाष्ठा, पाण्डित्यस्य परमं प्रतिमानम्!![3] अंग भवानेवं पृष्टो व्याचष्टाम्-कथं मूलं प्राचीनं वाऽर्थमनुहरद् रचनं नवनवोन्मेषि शक्यते भवितुम्!!! वस्तुतस्तर्कप्रमाणका वयम्, यस्तर्क आह तदस्माकं प्रमाणम्।[4] तर्कस्तु मूलमनुहरद्वचनं नैव नवं ब्रवीति।

**अतो मूलमिदं नास्ति मूढ़ः**—तथापि मौलिक शब्दस्य सत्यतासिद्धये मूलोऽयं मूढ इति नास्माभिरनुमन्तुं शक्यम्। किं तन्मूलमन्धतमसे विलीनमित्यत एव तेन मूर्खेण भाव्यम्? वस्तुतस्तन्मूलन्तु निबिडेऽन्धकारे

---

१. यणः=लकारस्य—जलशब्दे लकारस्य विरोधरूपस्य सम्प्रसारणम्। अत्र इग्यणः सम्प्रसारणम् (पा० सू० १/१/४५) इति सूत्रस्य छाया द्रष्टव्या।

२. अत्रार्थे 'कृपो रो लः' (पा० सू० ८/२/१८) सूत्रे 'बालमूल ········ वा रो लमापद्यते' इति वार्तिकं प्रमाणम्। तद्धि मूरशब्दस्य रेफस्य स्थाने समानेऽर्थे विकल्पेन लत्वमनुशास्ति।

३. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः (पा० सू० ५/१/५०) इति सूत्रेण भारादिषु मूलशब्दस्य च पाठेन पूर्वोक्तेऽर्थे शब्दोऽयं व्युत्पाद्यते।

४. न्यायमंजर्यां जयन्तभट्टः।

निमज्जितमपि, पंकमलेन मलिनमपि पुष्णाति पत्रम्, प्रीणाति पुष्पम्, अथ च पृणाति वृक्षमपि सर्वम्। जडोऽसौ मूर्खो वाऽस्ति महान् वेति वृक्षोऽयं तावत् प्रष्टव्यः। यदि वृक्षस्य स्यान्मुखं तर्हि स ऊर्ध्वबाहुः सन् महत्त्वमस्याचक्षीत, मुक्तकण्ठं धन्यवादांश्च वितीर्यात्।

अत इदं मूलम्, अतोऽयं जडः नास्ति मूर्खः। परं किं कथयामो वयममुं लोकम्। यः चाकचक्यैकधनः, चमत्कृतिपराधीनैकचेताः जडं मूर्खं मनुते !! तेन हि स्मार्येयं लोकोक्तिर्यत् न सर्वोऽपि चमत्कारः स्वर्णरूपः, नापि सर्वं स्वर्णरूपं महत्त्वं चमत्कृतावेवावस्थितिं भजते।[1]

**जडदेवः जडोऽपि देवोऽपि**—अत एवायं जडोऽन्धतमसे निमज्जितोऽपि जडदेवः, मूलं च दिव्यतया मूलदेवः। देवाः सन्ति प्रदीप्तप्रज्ञाना विद्याकमना इत्यत्र न कोऽपि सन्देहः। परं तेऽपि देवाः ये फलेन, न तु कण्ठेन स्वस्योपयोगितां ब्रुवते। यथोक्तं नैषधीयचरिते—

ब्रुवते हि फलेन साधवः,
न तु कण्ठेन निजोपयोगिताम्।

पुष्पस्य सर्वमपि सौन्दर्यं तस्मिन् मूले निहितम्। एवं मूले सौन्दर्यस्य प्रतिष्ठितत्वात् तं पंकजरूपेण वचनं न निर्मूलम्। यद्यहं पुष्पस्य मुखेन ब्रूयां तर्हि 'अस्ति मयि सौन्दर्यं, परं न तत् पङ्कमतिक्रामति। वस्तुतो हि पङ्के तस्मिन् सौन्दर्यमतिशेते, यतो हि सः सुन्दराय मह्यं (पुष्पाय) सौन्दर्यं प्रयच्छति'। किमत्राप्यास्ति कोऽपि सन्देहः यत् सौन्दर्यप्रदायकः स्वयं सुन्दरः न स्यात् ?

परं यदीदानीमपि जडोऽसौ न सुन्दरः, तर्हि पुष्पमपि कथं सुन्दरम्। तन्मते तु पुष्पेणापि मलिनेनैव भाव्यम्। मन्ये अमुमर्थमाश्रित्यैव कमलं क-मलरूपेणैव संप्रवदन्ति जनाः। यतो हि तत् कस्य=जलस्य मलमेव नातोऽधिकं किञ्चित् !!

---

१. Not all that tempt your wandering eyes and headless hearts is lawful prize. Nor all that glisters gold-Thomas Gray.

अत एवायं जडोऽपि देवोऽपि । अन्धतमसाच्छादितत्वाज्जडः, प्रदीप्त-प्रज्ञानेभ्यो दीपदानाद्देवः। मा स्म भूदत्र विरोधवादिनां शंका यत् कथमन्धः दीपं दातुं प्रभवति। सन्ति लोके बहवो भावाः विरोधिनः, न मनुष्यस्तान् समाधातुं पारयति । ईशावास्योपनिषदि 'तदेजति तन्नैजति तद्दूरे तदवन्तिके' इति मन्त्रेण विरोधानां समवायोऽङ्गीकृतः। जाग्रतः मूलमस्ति निद्रायां, निद्रायाः मूलमस्ति जाग्रतीति नास्त्यत्र विरोधप्रसारः किम् ? यदि जगदिदं विरोधं वृणीते तर्हि के वयं तस्य निषेधाय । प्रसार्यतां बौद्ध-दर्शन-भूषणं प्रमाणवार्तिकम्—

यदीदं स्वयमर्थानां रोचते तत्र के वयम् (प्र० वा० २१० श्लोकः)

एवं पुष्पेभ्यः सौन्दर्यप्रदः, महद्भ्रवनेभ्यो दृढभूमिः जडदेवोऽसौ वर्धताम् ॥

---

### कथं रीता ?

प्रश्नः—ननु कथं रिक्तार्थकः 'रीता' शब्दः कन्यानां नामधेय-रूपेण प्रचरति लोके ?

उत्तरम्—पूर्वं शब्दोऽयं ऋत शब्दात् स्त्रीलिंगे 'ऋता' इत्येवमासीत् । शब्दोऽयम् इंग्लिशभाषायां RITA इत्येवमलिख्यत । तत्तु 'रीता' इत्येवमपठ्यत प्रायुज्यत च लोके । साम्प्रतम् अन्न-पूर्णाऽपि कन्या 'रीता' इत्येवमुपचर्यते इति किं नास्ति चित्रम् !!

# क्षयो वा क्षेमं वा

क्षयशब्दोऽयम् आवेदं निवासार्थं विनाशार्थं चाभिरक्षतीति तथ्यं भाषाशास्त्रज्ञान् कुतुकवशंवदान् कुरुते। कथं निवासो विनाशश्च परस्परं सायुज्यमभिरक्षतः ?

**निवासे क्षयशब्दः**—'क्षये जागृहि प्रपश्यन्' इति वेदे, 'निर्जगाम पुनस्तस्मात् क्षयान्नारायणस्य ह' इति महाभारते (८१/१/२/२) यातनाश्च यमक्षये इति मनुस्मृतौ (६/६१) चापि निवासार्थे क्षयशब्दस्य प्रयोगः सन्दृश्यते।

**विनाशे क्षयशब्दः**—'क्षयो वर्तते दस्यूनाम्' इत्यादयस्सुबहवः प्रयोगा विनाशार्थे चाप्युपलभ्यन्ते। अद्यत्वे क्षयशब्दः विनाशार्थे एव प्रयुज्यते निरपवादम्। अमरकोशे 'निलयापचयौ क्षयौ' इति वचनेन क्षयशब्दस्यार्थद्वयं स्वीक्रियते।

यथा तु पाणिनीयं शास्त्रमनुशास्ति तथा केवलं स्वरभेदेनार्थवैभिन्यं शक्यते ज्ञातुम्। यदि क्षयशब्दोऽयम् आद्युदात्तस्तदा निवासार्थकः, अथान्तोदात्तस्तदा विनाशार्थकः।[1]

**अर्थद्वये क्षिधातुरपि**–निवासस्य विनाशस्य च कथा नात्रैवोपशाम्यति। क्षयशब्दस्य मूलं क्षिधातुरपि अर्थद्वये वरिवर्ति। निवासार्थे 'क्षियति', विनाशार्थे तु 'क्षयति' इत्येवं प्रयोगा उपलभ्यन्ते। ऋग्वेदे (७/७४/६) 'क्षियन्ति सुक्षितिम्' इति निवासार्थे, ऋग्वेदे (५/४२/११) 'यो विश्वस्य क्षयति' इत्यादयो विनाशार्थे सुबहवः प्रयोगा अस्मिन्नर्थे प्रमाणम्।

निवासार्थकक्षिधातुभुवः क्षितिः, क्षेत्रम्, क्षेमम्, योगक्षेमम् इत्यादयो नैके शब्दा क्षिधातोर्निवासार्थकत्वं सत्यापयन्ति। अथ च क्षिधातुप्रभवा एव 'क्षेयं पापम्, क्षय्यः, क्षीणः शशी इत्यादयस्सुबहवः शब्दाः विनाशमर्थापयन्ति।

---

१. क्षयो निवासे (पा० सू० ६/१/२०१)।

क्षयशब्दस्य स्थितिरेषा कस्य नास्ति विस्मयायालम् ? निवासार्थी, विनाशार्थी च प्राप्तः क्षयशब्दोऽतिपेशलेन उदात्तादिस्वरसूत्रेणैव विभिद्यते। निवासं विनाशं चान्तरा अस्त्येतावत् सामीप्यमिति तथ्यं चित्ते चमत्कारमाविष्करोति।

यथा तु शब्दोऽयं भणति तथा कस्मिंश्चिद्युगे स्थित्याऽनया अवश्यभाव्यम्। स्यान्नाम कश्चन कालखण्डः यत्र वर्षातपरुजाः गेहं गेहमवस्कन्दमासन्! तदा को हि नाम जनः शरण्यः कुशछदिःशरणस्य क्षयं (=गृहम्) क्षयात् (=विनाशात्) निवारयेत्!! 'तदा शरणमिदं क्षयान्नातिभिद्यते', 'क्षय एवास्मभ्यं श्वःश्रेयसाय कल्पते' इति निर्धारणमेव क्षयशब्दं निवासार्थकं निरमिमीत।

प्राकारीयाणां दृढानाम् इष्टकानां निर्माणे तु सति क्षयोऽयं गृहरूपेण पर्यवर्तत। तदानीं तु गृहमिदं सर्वानपि जनान् दृढस्तम्भरूपहस्तग्राहं गृह्णाति स्म। अत एव गृहमित्यन्वर्थं नामधेयं प्रचचार।[1] एवं च गृहमिदं सदा जनानां हृदये सन्निविष्टं सर्वथा क्षेमंकरं समभूत् प्रतियुगम्।

**द्वन्द्वः संस्कृत्योर्द्वयोः**—इत्थं निवासस्य नामधेयद्वयं संस्कृत्योर्द्वयोः संलक्षकं समभूत्। केचन 'भूमिरेव विष्टरं, द्यौरेव छादनम्' इति मन्यमानाः गृहं न्यक्कुर्वाणाः, निवासोऽयं वस्तुतः क्षय एवेति मतिं समास्थिषत। अपरे तु निवासेभ्यः परं प्रीयमाणाः निवास एव वस्तुतः सर्वालंकारभूतं क्षेमं गृहमिति बुद्धिमतायिषत।

अत एव क्षयो वा स्यात्, क्षेमं वेत्यर्थे प्रवादः साहित्येषूपलभ्यते। सुत्तपिटके क्षयेणैव देवाः प्रीणन्तीति भगवान् बुद्धः ब्रवीति। धनियगोपस्तु 'गृहेण क्षेमंकरेणैव नन्दन्ति देवा' इति व्याहरति। प्रसार्यतामत्रार्थे धनियसुत्तम्—

धनियगोपः—

**पक्वौदनः दुग्धक्षीरोऽहमस्मि अनुतीरे मह्या एकरात्रिवासः।**
**विवृता कुटी निवृतोऽग्निः अथ चेत् प्रार्थयसे प्रवर्ष देव।**

स्पष्टमत्र सामाजिकानामस्माकं प्रतिनिधिः दृढं संछन्नं गृहं क्षेमंकरं ब्रूते। भगवांस्तु गृहमेवं क्षयरूपं निर्धारयति।

---

१. गृहशब्दोऽयं 'गृह्णातीति गृहम्' इति व्युत्पत्त्या 'गेहे कः' (पा० सू० ३/१/१४४) सूत्रेण निष्पाद्यते।

**क्षये मतिविधायिनः**—सन्त्यन्येऽपि प्रसंगा यत्र गृहमिदं क्षयकरमित्यं-जसा व्याख्यायते। तथाहि एवं हि श्रूयते सांख्यसूत्रे-

**अनारम्भेऽपि परगृहे सुखी सर्पवत् (सां० सू० ४/१२)।**

गृहाणां कृते नास्माभिरारम्भो यत्नो वा विधेयः। यतो हि सर्पवत् परगृहे निवसन्तो जनाः सुखिनो भवन्तीत्यस्ति सांख्यसमाचारः। यथा हि सर्पोऽन्येषां विवरे प्रविश्य निवासं प्रकल्पयते-एवमस्माभिरपि वर्तितव्यम्। यदि त्वद्यत्वे सर्वेऽपि जनाः सांख्यमनुमन्यमानाः सर्पवदाचरेयुस्तदा तु देशेऽस्मिन् गृहनिर्माणसमस्या तत्क्षणं वायौ विकीर्येतैव केवलम्। महाभारते तु सांख्यमनुमन्य श्लोकोऽयम् आविष्कृतो विद्यते—

गृहारम्भो हि दुःखाय न सुखाय कथञ्चन।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते॥

एवं 'गृहारम्भस्तु दुःखायैव संवर्तते', 'क्षये संवर्तते क्षिया' इत्येवास्ति प्रथमायाः संस्कृतेर्निर्धारणम्।

**गृहे मतिविधायिनः**—अपरस्यां संस्कृतौ तु चन्द्रिकाधौतं सौधमेव परं काल्याणकं, परं रामणीयकं परमाशास्यं हृदयस्येति स्वीक्रियते। इमे स्फटिकोपलविग्रहा गृहा एव, येषामनुभवे सति सर्वमश्रुतं श्रुतं भवत्यमतं मतम्, अविज्ञातं विज्ञातम्! यतश्च सौम्यैकेन गुहेण सर्वं सौभाग्यं, सर्वं कौलीन्यं विज्ञातं भवत्यतो गृहमित्येव सत्यम्!!

अतएव यद्यपि 'क्षीयते' इत्यस्य 'छीजना' इत्यादयः प्राकृतप्रयोगा उपलभ्यन्ते, परं गृहार्थकस्य क्षयशब्दस्य प्राकृतादिप्रयोगो न क्वापि दृश्यते।

**इतिहासः निरालाशब्दस्य**—अपि च 'निरालय' शब्दान्निसृतः 'निराला' शब्दोऽस्मिन् प्रसंगे निभाल्यताम्। शब्दोऽयं 'न विद्यते आलयः यस्य' इति विग्रहेण गृहविहीनायोपचर्यते। विषमस्थ एवं मनुष्यः लोक-चक्षुःषु चित्रीयामुपदधे। अत एव 'निराला' शब्दोऽयम् एकाकीत्यर्थं विचित्रमित्यर्थं च ब्रवीति।[1]

**विशालशब्दः किं ब्रवीति**—अपि च संस्कृते 'विशाल' शब्दोऽपि गृहाणां स्पृहणीयतां सहजं व्याचष्टे। शब्दोऽयं पाणिनिशासनानुसारेण

---

१. द्रष्टव्यम्—A Comparative dictionary of Indo-Aryan languages-R. L. Turner.

विशब्दात् शालच् प्रत्ययेन निष्पाद्यते।[1] टीकाकारास्तु 'विगते शृंगे विशाले' इत्यर्थमाहुः। परं निभाल्यतां मनाक्-किं विगतशृंग एव पशुः विशाल इत्याख्यायते? किं सशृंगोऽपि महदायामकः विशालशब्देन नास्माभिः प्रोच्यताम्? एतत्तु नास्त्येव। अतएव 'विशिष्टा महती शाला यत्र' इत्येवं व्याख्यातव्यमस्माभिः। तत्सादृश्यात्तु सर्वाण्यपि महान्ति वस्तूनि विशालशब्देन प्रोच्यन्ते। एवं सति 'गृहैर्विशालैरपि भूरिशालैः' इत्यादयः प्रयोगा अप्यनुगृहीताः भवन्ति। एवं च 'सर्वेषामपि महतां वस्तूनां विशालं गृहमेव प्रतिमानम्' 'शालाद्वारकं सर्वेषां विशालत्वमिति प्रतिवेदितं भवति। एवं च शब्दोऽयं वस्तुतो नभश्चुम्बिभवनानां स्पृहणीयतां द्योतयति।

**साहित्ये क्षेमंकरं गृहम्**—साम्प्रतन्तु गृहमिदं न कदापि क्षयः, अपितु क्षेमंकरं, प्रियंकरं, भद्रंकरं च। वैदिके युगे गृहार्थको 'दमो' मद एवास्त्यसंशयम्।[2] सन्ति वेदे सुबहवश्शब्दा ये हि वर्णविपर्यासमनुप्राप्ताः। यथा मासः, समा च, हिंसः, सिंहश्च। एवं सौधोऽपि वस्तुतः मदपूर्णः सन् दमत्वमुपयातः। 'पुत्रैः, पौत्रैश्च सह मोदमानौ दम्पती स्वे गृहे वर्षं शतं गमयेवहि' इत्येवं प्रार्थनान्यद्यापि मंजु गुंजन्ति कर्णयोः!

**इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्।**
**क्रीडन्तौ पुत्रैर्नप्तृभिः मोदमानौ स्वे गृहे॥**

—ऋ० १०/८५/४२

'दम्पती' शब्दश्च पूर्वं 'दमपतिः' इत्येवमासीत्। गृहार्थके दमशब्दे सति 'दमपतिः' इति शब्दः 'दमस्य पतिः' इति विग्रहेण 'गृहस्य पतिः' इत्यर्थक आसीत्। पश्चात्तु 'गृहिण्या विना गृहं कथं संगच्छताम्', 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इत्यादि विचारबलेन दमशब्दोऽयं गृहिण्यर्थे पर्यवर्तत, अन्त्याकारलोपश्च समभवत्। एतत् सर्वमस्ति गृहस्य गृहिण्याश्च माहात्म्यमित्यत्र नास्ति सन्देहलेशोऽपि।

एवं च प्रासाद्याः सन्तु प्रासादाः, भवनानि सन्तु पीतये, शंयूनभिस्रवन्तु नः इत्येवं वयं परमाशास्महे।

---

१. वेः शालच्छंकटचौ (पा० सू० ५।२।२८)
२. वेदे दमशब्दः गृहार्थे प्रयुज्यते। अस्मादेव दमशब्दात् लैटिनभाषायाः dominus इंग्लिशभाषायाः dominion इत्यादिशब्दाः विकासं प्राप्ताः।

# छायाचित्रं वा प्रकाशचित्रं वा

चित्रमिदम् अतिप्राचीनकालात् समवर्तताग्रे इत्यत्र सन्ति सन्तः प्रमाणम्। प्राचीन-पुरावशेषेषु चित्राणि लिखितानि दृश्यन्ते। लिपिरपि पूर्वं चित्रलिपि-रूपेण प्रादुर्बभूव इति विदुषां मतम्। साम्प्रतमपि रेखाणां पौर्वापर्येण या लिपिः दृश्यते सा चित्रेभ्यो नातिभिद्यते।

चित्रनिर्माणम् अनुकरणभक्त्या समारब्धम्। प्लवमानान् व्याघ्रान्, स्यन्दमानान् नदान् कथं वयम् अनुकुर्वीमहि, कथं रूपं रूपं प्रतिरूपं विदधीमहि—इत्येषा भक्तिरेव चित्राण्यवततार। सामान्य-जनानां भक्तिरपि नासीदतो भिन्ना। वाचे वाङ्मयं, श्रोत्राय श्रुतम् (=वेदः), चक्षुषे च चित्रं रोचते—इति मन्वते स्म मनुजाः।

कालक्रमेण जनाः चित्रकलासु नैपुण्यम् आसेदुः। सूक्ष्मातिसूक्ष्मभेदा अपि नासंस्तेषां चक्षुषामविषयाः। शोभनवस्तुवेदं कृतचित्रयत्नास्ते जनाः प्रथन्ते स्म समाजेषु। चित्रेष्वनेकेषु बहुदृश्वानस्ते चित्रकृतः समाद्रियन्ते स्म सभासु।

**पूर्वं चित्राणां रंजनं तदनु मनोरंजनम्—**

एवं चित्रकला सर्वदा वृद्धिमुपेयाय। यदा तु विविधै रंगैस्तेषां रंजनं समारब्धम्, तदा तु चित्रकलायां कान्तिः सम्बभूव। तदा विस्फारित-नयनाः चकितचकिताः जनाः दर्शं दर्शं प्रसीदन्ति स्म। अहो नैपुण्यमस्य चित्रस्य, अहो प्रावीण्यमस्याः कलायाः—इत्येवं विस्मयविधेयाः प्रशंसा-प्रवणाश्च जनाः भाषन्ते स्म। चित्रमिदं केवलं प्राणान् न दधाति, प्राणोपधाने तु चित्रमिदं ब्रूयाच्च, शृणुयाच्च—इत्यपि तेषामासीन्मतम्। विधिरपि यदा सर्वातिशायि रूपं रचयितुमुत्सहते तदा चित्रं पूर्वं निर्माय तत्र प्राणान्निवेशयति इति महाकविः कालिदासः।[1]

एवं चित्रनिर्माणमेव पूर्वं, प्राणोपधानन्तूत्तरवर्ति, चित्ररंजनमेव पूर्वं, मनोरंजनन्तूत्तरवर्ति, इत्यप्यासीत् वाचां प्रचारः।

१. चित्रे निवेश्य परिकल्पितसत्त्वयोगा,
रूपोच्चयेन मनसा विधिना कृता तु। (अभिज्ञानशाकुन्तलम्, २.९)

चित्राणां विस्मयाधायकत्वमस्ति शब्दगम्यम्। एतद्धि चित्राणां विस्मापनीयत्वं यत् चित्रशब्दः धातुरूपः सन्नाश्चयार्थकत्वं प्राप। इदानीं किमप्याश्चर्यान्वितं वस्तु दृष्ट्वा चित्रीयन्ते जनाः !! अथ च पूर्वं चित्रमेव केवलमासीद् विचित्रम्। विचित्रशब्दोऽयं विविधं चित्रमिति व्युत्पत्त्या मूलतश्चित्राणामेव वैविध्यं द्योतयति स्म। इदानीन्तु सर्वमाश्चर्यं भवति विचित्रमिति विजयतां चित्रमाहात्म्यम् !!

**न्यायशास्त्रे चित्रं रूपम्—**

न्यायशास्त्रे तु विवादपदमेवं यत् चित्रं रूपम् (विविधरूपसमाहरणम्) नीलपीतादिभ्यो व्यतिरिच्यते वा न वा। तत्र प्राचीनाः मन्वते यत् चित्रं नीलपीतादिप्रकारेषु न सन्निविशते, नीलादि-रूपाणां व्याप्यवृत्तित्वात्। अर्थात् नीलादयः सर्वस्मिन्नपि द्रव्ये समं व्याप्नुवन्ति। चित्रं तु न तथा—एकस्मिन्नेव पटे नीलेन सह पीतादि-रूपाणामपि सम्भवात्। यदि नीलं वा पीतं वेत्यादयः सर्वस्मिन्नपि पटे न समं व्याप्नुवन्ति तर्हि व्याप्यवृत्ति-रूपादिकमिति रिक्तं वचः !! अतो 'व्याप्यवृत्ति रूपम्' इति सिद्धान्त-संरक्षणाय चित्रमिदमतिरिक्तमिति प्राचीनाः।[1]

नवीनास्तु यथार्थतरं पक्षमवलम्बन्ते। तेषां मतम्—नीलादिकं सर्वस्मिन्नप्यवयविनि व्याप्नुवन्ति न वेति प्रत्यक्षं तावद् दृश्यताम्, चित्रकारो वा पृच्छ्यताम्। चित्रकारो हि मनुष्यचित्रनिर्माणे कस्मिश्चिद् भागे नीलमेव, क्वचन पीतमेव, क्वचन च रक्तमेव रूपं ससंजति। न तत्र नीलं सर्वस्मिश्चित्रे व्याप्नोति। अतः कथमिदं नीलं व्याप्यवृत्ति-रूपेण प्रोच्यताम् ? वस्तुतो न बाह्यदृश्येन शास्त्रकारा अनुवर्त्याः, शास्त्रकारैर्नाम बाह्यदृश्यमनुवर्त्यम्। यदि नीलादिकं भागविशेषेष्वेव संसंजति तर्हि के वयं व्याप्यवृत्ति रूपमिति प्रचाराय। अतो न व्याप्यवृत्त्येव रूपम्, चित्रं नातिरिक्तं रूपमिति साधु संगिरन्ते नवीनाः।[2]

---

१. नाप्यव्याप्यवृत्ति नीलादिकमुत्पद्यते, व्याप्यवृत्तिजातीयगुणानाम् अव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्ररूपमारभ्यते। (सिद्धान्तमुक्तावली १०० श्लोके)

२. नव्यास्तु तत्र व्याप्यवृत्त्येव नाना रूपं नीलादेः पीतादिप्रतिबन्धकत्व-कल्पने गौरवात्। (सिद्धान्तमुक्तावली १०० श्लोके)

**छायाचित्राणां सम्प्रसारणम्—**

चित्राणां वैचित्र्यमिदं पूर्वं रेखाचित्रेष्वेव संजाघटीति स्म। अष्टादश्यां शताब्द्यां तु छायाचित्राणां प्रचलनं सम्बभूव। तस्यां प्रक्रियायां मनुजा नहि, अपि तु मनुजच्छायम् अनुक्रियते स्म। या हि छाया न्यायशास्त्रेष्व-भावरूपा सा तदानीं चित्ररूपेणाभिव्यज्यते स्म। छायानां चित्रत्वात् तच्चित्रं छायाचित्र-रूपेण समूचिरे जनाः।[1] चित्राण्येतानि 'सिलुएट चित्र' रूपेणापि जनाः सम्प्रवदन्ति स्म।

**सिलुएट चित्रम्—**

इति नामधेयविस्तारोऽतिरोचकः। अष्टादश्यां शताब्द्यां फ्रांसदेशस्य वित्तमंत्री 'एथेन दे सिलुएट' महोदय आसीत्। स हि जनान् मितव्ययिता-मुपदिशति स्म। तस्मिन् काले धनाढ्यवर्गीयाः रेखाचित्रनिर्माणे सुबहु धनं व्ययन्ति स्म। परं नवीनानि छायाचित्राणि तु अल्पेनैव धनेन निर्मीयन्ते स्म। अतोऽल्पव्ययसाध्यत्वात्, सिलुएट महोदयैश्च प्रशंसितत्वात् चित्राण्येतानि 'सिलुएट चित्राणि' इत्येवं व्यवाह्रियन्त।[2]

**भारते वर्षे छायाचित्रम्—**

भारते वर्षेऽपि चित्राणीमानि छायाचित्ररूपेण समागतानि। एवं पदं च पदार्थं च भारतीयाः स्वीचक्रुः। पश्चात्तु 'कैमरा' यन्त्रद्वारा नवीनानि चित्राण्यवातीर्यन्त। विगतायां शताब्द्याम् अस्याः कलायाः समागमनं विज्ञानस्य चमत्कारमेव। यथा तत्कालीनं पुस्तकलिखितं विवरणं ब्रवीति

---

१. मनुजवदनं प्रदीपसम्मुखं रक्षित्वा तस्य छाया दर्पणे सम्पाद्यते। चित्रकारः तां छायां रेखया दर्पणस्पृष्टे पत्रे लिखति स्म। एतेन सिलुएट चित्राणि छायाचित्राणि वा निर्मीयन्ते स्म।

२. सिलुएट शब्द का उद्भव बहुत ही मजेदार है। १८वीं शती के मध्य में फ्रांस के वित्तमंत्री एथेन दे सिलुएट थे। जो अपने समकालीनों को मितव्ययिता का उपदेश दिया करते थे। उन्हें उच्चवर्गीयों से विशेष शिकायत थी कि वे चित्रों के पीछे बहुत धन बर्बाद करते थे। छायाचित्र के सस्तेपन के कारण कुछ लाग उसे सिलुएट चित्र कहने लगे—मनोरंजक भौतिकी पृ० १४८।

तथा तस्मिन् समये जनाः पृच्छन्ति स्म यत् विना मनुष्यं, विना च मनुष्यतूलिकां कुतस्तरां चित्रं, कुतस्तमां च तत्स्थ-सौन्दर्यम् !! तेषामासीद् हर्षसध्रीचीनस्य विस्मयस्यायं विषयः यत् विनैव मनुजं चित्रमपि सम्पद्यते, चित्रसौन्दर्यमपि ।[1] परं प्रत्यक्षे यन्त्रे नासीत् प्रश्नस्यावकाशः ।

**आधुनिके युगे प्रकाशचित्रम्—**

आधुनिके चित्रनिर्माणे छाया नहि, अपितु प्रकाश उपयुज्यते । छायाचित्रे छाया अनुक्रियते स्म, इदानीन्तु मनुजवदनपातिप्रकाशकिरणा एव परावर्त्य कैमरामध्ये दर्पणगोलके प्रविश्य तच्चित्रमनुहरन्ति । प्रक्रियेयं चक्षुर्भ्यां रूपग्रहणप्रकारान्नातिभिद्यते । मम चक्षुषी प्रकाशसन्निधौ साक्षाद्मनुजवदनं (छाया स्याद् वा न वा) स्वयोरनुहरतः । तामेव क्रियां 'पश्यति' रूपेण ब्रवीत्ययं लोकः । 'कैमरा' यन्त्रमपि कृत्रिमं चक्षुर्गोलकं सत् तामेव प्रक्रियां सर्वथाऽनुकरोति । कथं नाम नैतत् चित्रं यत् सृष्ट्यादितः प्रवर्तमानां रूपग्रहणप्रक्रियां मानवः केवलं विगतशताब्दीतोऽनुकर्तुमक्षमत ।[2]

**साम्प्रतं छायाचित्रं कथमभिधीयताम्—**

एवं साम्प्रतं विराजते प्रकाशचित्रम् । स्मृतिशेषाण्यभूवन् छायाचित्राणां दिनानि । परं चित्राणां विचित्रकथा तु नाद्यापि समाप्तिमेति । इदानीमपि फोटोचित्राणि छायाचित्ररूपेणैव पण्डितमण्डनीकेषु प्रयुज्यन्ते इत्यहो चित्राणां वैचित्र्यम् !!

---

१. दृश्यताम्—'मनोरंजक भौतिकी' ग्रन्थे १९१ पृष्ठे प्रोक्ता रुचिरा कथा ।।

२. The wonderful powers of vision that have been derived from camera—Hermsworth popular science page 3483.

# वपुषो भूषणं वस्त्रम्

भारते देशे अतिविचित्रेयं पटानां वस्त्राणां वा कथा समुपलभ्यते। अस्याः पुरातन्याः कथायाः बहून्यंगानि कालक्रमाद् गुहायां निहितानि, परन्तथापि साहित्य-माध्यमेन भाषाविज्ञानविधिना च कतिपयानामुद्घाटनं शक्यते कर्तुम्।

**पूर्वं त्वचो वस्त्राणि**—प्राणिषु, भोजनानन्तरं शीतातपरक्षणार्थं छादनस्यावश्यकताऽन्वभूयत। अतस्ते तत्पूर्त्यर्थं वृक्षत्वचः, पशुचर्माणि च प्रायुञ्जन्। अस्य सिद्धये सन्ति साहित्ये बहूनि प्रमाणानि। शतपथब्राह्मणे **'त्वक् हि वासः,** इति प्रोक्तम्'[1]। एतेन तस्मिन् समये वृक्षत्वक्, पशुत्वग् वा वासो रूपेण कल्प्यते स्म इति प्रतीयते। निरुक्ते एकस्मिन् प्राचीनतमे श्लोके वस्त्रार्थे 'त्वक्त्र' शब्दस्य प्रयोगः समुपलभ्यते। तेनेदमपि भण्यते यत् कथं केऽपि दरिद्राः जना आर्तित्राणाय वसनमनुक्रोशन्ति स्म। तथाहि—

**निष्ट्वक्त्रासश्चिदिन्नरो भूरितोका वृका इव।**
**बिभ्यस्यन्तो ववाशिरे शिशिरं जीवनाय कम्॥** (निरुक्त-१।१९)

अर्थात्—वस्त्रविरहिता बह्वपत्याः जनाः वृकादिव बिभ्यतः शिशिरं जीवनाय ववाशिरे। अस्मिन्नपि श्लोके वसनार्थे 'त्वक्त्र' शब्दः प्रायुज्यत। अतस्समये तस्मिन् वसनाय त्वचः प्रचार आसीदिति निश्चीयते।

**कुशानां वस्त्राणि**—तस्मिन् समये कुशानां लम्बतृणानां च वस्त्राणि निर्मीयन्ते स्म इत्यपि नास्ति प्रमाणपरिहीणम्। यतो हि शतपथब्राह्मणे **'कौशं वासः'** इत्यपि प्रयोगः शक्यते द्रष्टुम्[2]। अत्र 'कौश' शब्दः कुश-शब्दात् विकारार्थे अण् प्रत्ययेन 'कुशानां विकारः' इति विग्रहेण सम्पद्यते।

---

१. शतपथ ब्राह्मणम्, ४. ३. ४. २६.

२. शतपथ ब्राह्मणम्, ५. २. १. ८.

अतस्सिद्ध्यतीदं यत् कुशनिर्मितानि वस्त्राणि तदा प्रचलन्ति स्म। अत्र न सम्बद्ध्यतां कदापि कौशशब्दः कौशेय-शब्देन। कौशेयशब्दस्तु 'कोश' शब्दात् संभूतार्थे ढञ् प्रत्यये कृते 'कोशे संभूतं वस्त्रम्' इति विग्रेहण निष्पाद्यते[1]। स ह्येवं क्षौमवस्त्रस्य वाचकः। एषा ह्यनुश्रुतिर्यत् चीन-देशादागत्य कौशेयं वस्त्रमस्मिन् देशे प्रचारमाप[2]। परं कौशं वासस्तु अस्यैव देशस्यान्वेषणम् !! अतः महदन्तरमनयोः कोशकौशेययोः !!

**ऊर्णासूत्राणां वस्त्राणि**—एवं वैदिके युगे ऊर्णासूत्रेणापि वस्त्राणि निर्मीयन्ते स्म। एतद्धि ऊर्णासूत्रेण कवयो वयन्ति (यजु० १९. ८०) इत्यादिभिर्वेदवचोभिरवगम्यते। एवंभूतानि वस्त्राणि वैदिकयुगे कृत-नामधेयया लस्पूजन्या (=काष्ठनिर्मितया स्थूलया सूच्या) सीव्यन्ते स्म। वस्त्रेऽस्मिन् स्तात् किंचित् सौविध्यं कौशापेक्षया, भवताच्च रोचिष्णुता शीतप्रदेशे, परं ग्रीष्मप्रदेशे त्विदं दुःखाधायकमेवासीत्।

ऊर्णासूत्रनिर्मितं कम्बलमपि भृशं प्रचचार लोके। पाणिनिसमये क्रय्याणि कम्बलानि आपणेषु यत्र तत्रोपलभ्यन्ते स्म। एतद्धि सूत्रेणैकेन बोध्यते[3]।

**अम्बरस्यातिविचित्र इतिहासः**—वस्त्रवाचकस्य अम्बरशब्दस्याप्यस्ति अतिविचित्रमैतिह्यम्। अम्बरशब्दोऽयं साम्प्रतम् आकाशार्थे वस्त्रार्थे च प्रयुज्यते। परं विचार्यताम्, क्व वस्त्रस्याच्छादकता, क्व चाकाशस्य निरावरणशालित्वम्! कथमनयोरर्थयोरत्र मिथः समागमः? वस्तुतस्तु पूर्वं शब्दोऽयमाकाशार्थक आसीत्, पश्चात्तु प्राकृतप्रभावेण वस्त्रार्थकोऽपि समपद्यत[4]।

प्राकृते हि 'रक्तकम्बल' शब्दः 'रत्तम्बर' रूपेण प्रयुज्यते स्म। तत्र वर्तमानोऽम्बरशब्दः भाषाविज्ञानेऽर्थविस्तारविधिना वस्त्रार्थकत्वं प्राप्तः।

---

१. कोशाड्ढञ् (पा० सू० ४. ३. ४२)।

२. 'चीनांशुकमिव केतोः प्रवतं नीयमानस्य' इति शाकुन्तले १/३४ श्लोके चीनांशुकशब्देन कौशेय वस्त्रमेवोल्लिख्यते।

३. कुरुगार्हपत····पण्यकम्बलो (पा० सू० ६. २. ४२)।

४. अम्बरशब्दोऽयं निरुक्ते अन्तरिक्षनामसु पठितः। प्राकृतप्रभाव-सिद्धये द्रष्टव्यम्—Pali-English Dictionary.

J. W. Rhys Davids

शब्दार्थौ चेमौ तथा प्रियंकरणतामासेदतुर्लोके यत् संस्कृतेऽपि तौ प्रत्यगृह्येतां विद्वद्भिः ।

**कार्पासवस्त्राणां पटानां वाऽतिरोचक इतिहासः**—परं कार्पासवस्त्रं कस्मात् प्रदेशात् कस्मिन् काले वा समागतम् ? अत्र नास्ति किमपि निश्चायकं प्रमाणमुपलब्धं साहित्ये । परं शब्दोऽयं यथाऽभिव्यनक्ति तथा 'निषाद' जातिवर्गादागतेनानेन वस्त्रेण भाव्यम् । कार्पासस्य कृते नास्ति कश्चन शब्दः भारतीयार्यभाषायां प्रसिद्धः । पासः, कपासः, कार्पास-शब्दास्तु 'निषाद' परिवारे (astro Asiatic languages) मूलतः प्रयुक्ता इति संगिरन्ते भाषा-वैज्ञानिकाः[1] । अतः कर्पासमिदं मूलतस्तेषा-मेवान्वेषणमिति वक्तुं पार्यते ।

अस्मादेव कर्पासशब्दात् कर्पटशब्दः पटशब्दश्चास्तित्वं प्राप्तः । तस्यां भाषायां सकारस्य स्थाने टकारत्वं सामान्यम् । एवमस्मिन् शब्देऽपि टत्वं सम्पन्नम् । तस्यां च भाषायां 'कर्' शब्द उपसर्गरूपेण प्रयुज्यते । एवं वस्त्रार्थे उपसर्गरहितः पटशब्दः उपसर्गसहितश्च कर्पटशब्दः प्रयुज्यते स्म ।

वस्त्रमिदं कार्पासिकं स्वेन गुणेन शीघ्रं लोके प्रियंभावुकतामगात् । अस्य वस्त्रस्य समागमने सति राहुलसांकृत्यायनोपन्यासानुसारेण एवं जनाः ब्रुवते स्म—'हन्त भोः, महतो कष्टान्-मुक्ता वयमस्य कार्पासवस्त्रस्य कृपाप्रभावेण । क्व ऊर्णावस्त्रस्य औष्ण्यं, क्व च कार्पासवस्त्रस्य सौवि-ध्यम् । दिष्ट्या परित्राता वयमस्मात् ऊर्णावस्त्रात् । साम्प्रतं कोमलं कार्पासवस्त्रमस्मभ्यं भृशं सुखाकरोति । ते चित्रीयन्ते चैवम्—"आश्चर्यम् इमानि नवीनान्यूर्णासूत्राणि (कर्पाससूत्राणि) वृक्षेभ्यः प्राप्यन्ते न पशुभ्यः !!"[2]

---

१. The existence of पट and कर्पट side by side permits us to isolate the prefix कर् and points out onee again to the Austro Asiatic domain.

—Pre-Aryan and pre-Dravedian in India, Page 27.

२. मित्र पुरु ! यह तुम्हारी झंडियाँ बड़ी हल्की और चिकनी हैं । हमारे यहाँ तो ऐसे वस्त्र नहीं बनते । यहाँ दूसरी तरह की भेड़े होंगी ?

परं शिष्टसमाजे नेदं तथाऽभिनन्द्यमभूत्। शिष्टजनेभ्यः प्रत्नं वस्तु अधिकतरं रोचते स्म, न तु नूतनम्। 'यद् वस्तु, यत् कर्म देवगणाः पितरश्चोपासते, तेन वस्तुना तेन च कर्मणा मामद्य वस्तुमन्तं कर्मण्यं च कुरु' इत्येवं ते प्रार्थयन्ते स्म[1]। नूतनं वस्तु सांन्यासिकं तिष्ठतु तावत्, पुराणन्तु समृध्यतामनारतमित्येवं तेषां विचार आसीत् कूटस्थः। परस्सहस्रेभ्यो वर्षेभ्यस्समागतानाम् ऋचां संरक्षणे, नवीनानां च परिहाणे इयमेवासीद् वाचोयुक्तिः। विचारपद्धतिमेनां परिहातुं महाकवेः कालिदासस्य उक्तिरियं संगच्छते—

**पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यम्।**

अस्तु तावत्, प्रकृतमनुसरामः। पुराणप्रियैः शिष्टैः कार्पासिकवस्त्रमिदं शोभाधायकमपि सन्नानुवमन्यत। 'स्यात् किमपि सौविध्यं कार्पासिके वस्त्रे, परम् ऊर्णावस्त्रधारिणी परम्परीणा धिषणा तु नैव पराजेया' इत्यासीत्तेषां बद्धमूलो विचारः। अत एव कार्पासवस्त्रधारिणां, कर्पटधारिणां वा कृते शिष्टास्ते हेयदृष्टिमववर्धयन्। दुष्टार्थकः 'कार्पटिक' शब्दोऽयम् उद्यम्य बाहू अनुक्रोशमनुक्रोशं तथ्यमेतद् वर्णयति।[2] कथमसौ कर्पटवस्त्रधारी दुष्टः संवर्तताम्? अनेन विधिना तु वयं सर्वे कर्पावस्त्रधारिणः कार्पटिकाः!!! किं स्यादस्य रहस्यम् ऋतेऽस्याः प्रवृत्तेः।

---

यह भेड़ों का ऊन नहीं सुमेध!

तो फिर?

यह ऐसा ऊन है जो वृक्ष पर उगता है। हमारे यहाँ जैसे भेड़ों के शरीर पर ऊन उगता है, उसी तरह यह ऊन जंगल में वृक्ष पर उगता है।

—द्रष्टव्यम्—राहुल सांकृत्यायन कृतस्य—'वोलगा से गंगा' 'पुरुधान' परिच्छेदः पृ० ७८।

१. 'यां मेधां देवगणाः पितरश्चोपासते। तया मामद्य मेधयाऽग्रे मेधाविनं कुरु' इति मन्त्रस्य छायाऽत्र द्रष्टव्या।

२. कार्पटिकशब्दप्रभवः 'कप्पडिआ' इति प्राकृत शब्दः धूर्तार्थे प्रयुज्यते। द्रष्टव्यम्—पाइअ सद्दमहण्णवो। मृच्छकटिके चास्मिन्नर्थे शब्दस्यास्य प्रयोगः।

एवं शिष्टजनः काममूर्ध्वबाहुः विरौतु, परं समाजनदीवेगस्तु चलत्येवानिर्बन्धः। कर्पासवस्त्रैः सौविध्यप्राप्ताः जनाः न शिष्टवचनेषु कर्णौ दधिरे। एवं वस्त्राणीमानि लोकेऽभिनन्द्यानि अभूवन्। अतः शिष्टा अपि पश्चादन्वमन्यन्त तानि वस्त्राणि। एवं पटशब्दः वस्त्रार्थकः संस्कृते प्रचलितोऽभूत्। यद्यपि ऋणिनस्ते संस्कृताः विद्वासः अस्मै शब्दाय, संस्कृतेऽस्य व्युत्पत्तेरभावात्[1]। पश्यत, कियदिदं वैलक्षण्यम् यदेकस्या एव भाषाया संभूतौ द्वौ शब्दौ स्तः। परं संस्कृते एकः वस्त्रार्थकः, अपरस्तु निन्दार्थकः।

परमशिष्टसमाजे तु नैषा कथाऽऽसीत्। अशिष्टास्ते पांसुलपादा सौविध्यं प्रथमं ध्यायन्ति स्म। परम्परा तिष्ठतु, न वा तिष्ठतु' इति नासीत् तेषां चिन्ताविषयः। न हि कश्चन रथे सति पद्भ्यां गन्तुं समीहते। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति शंकराचार्यः। अतस्तस्मिन् समाजे कार्पासवस्त्रं, कर्पटशब्दश्च प्रकामं प्रचलितोऽभूत्। अत एव ग्राम्यजनानां प्राकृतभाषायां वस्त्रार्थकः 'कप्पट' शब्द उपलभ्यते। शब्दोऽयं प्राकृतादिकाले अपभ्रंशकाले च प्रयुज्यते स्म। यतो हि अपभ्रंशभाषायां 'कप्पट' शब्दादेव संभूतः 'कपड़ा' शब्दः हिन्दीभाषादौ समुपलभ्यते। हिन्दीभाषादयः संस्कृतापेक्षयाऽधिकां प्राकृतादिभ्यः प्रवृत्तिमग्रहिषुः। अयमपि शब्दः न कदापि संस्कृतात् पटशब्दान्निष्पन्नः। तथात्वे सति 'कपड़ा' शब्दे ककारागमनम् असमाधेयं स्यात्। 'कप्पट' शब्दात्तु 'कपड़ा' शब्दनिष्पत्तिः 'काप्पटिक' शब्दाच्च 'कापड़िया जातिनिष्पत्तिः रुचिरतरा। सा जातिरस्ति सम्मानिता समाजे, न सा कदापि संस्कृतार्थं समीहते। तेषां सम्मानं त्वत्र प्राकृतप्रदत्तमेव! एवं यदेव संस्कृते दोषदूषितं तदेव प्राकृते गुणिगणसेवितम् इत्यस्ति महच्चित्रम् !!

इदमस्ति पटानां कर्पटानां चातिरोचकं भाषावैज्ञानिकमैतिह्यम्।

---

१. पटशब्दस्य संस्कृते प्रयोगप्रचारे सति कतिपये वैयाकरणाः 'कर्पट' शब्दस्य 'करस्य पट' इत्येवमलीकां व्युत्पत्तिमकुर्वन्। व्युत्पत्त्याऽनया शब्दोऽपि न संवदति, अर्थश्च।

# महर्षभत्वं वृणुतां सदा सखे !

अस्त्यत्र तथ्यं यत् जीवने शक्तेः, यशसः, श्रियश्च सिद्धये महर्षभत्वं भवान् कामयताम्। इतिहासे परम्परीणा मतिस्तथ्यमेतदनुवदति। रामायणे, ग्रन्थेषु चान्येषु शक्तिशालिनं पुरुषं द्विजर्षभरूपेण, नरर्षभरूपेण वा संबोधयन्ति स्म। द्विजर्षभशब्दस्य विग्रहः 'द्विजः ऋषभ इव इत्येवं वर्तते। एवं सिद्ध्यतीदं यत् गुणानां श्रेष्ठतायाः पराकाष्ठा ऋषभे वर्तते स्म। तदैव ऋषभस्योपमानं सार्थकं भवति। यथाऽद्यत्वे अश्वः शक्तेः प्रतिमानरूपेण (Horse power) उपचर्यते। एवं प्राचीनकाले ऋषभः गुणानां परां कोटिं लभते स्म। एवं परम्परां जुषमाणैरस्माभिः महर्षभत्वमेष्टव्यमित्यत्र नास्ति कश्चन सन्देहावसरः।

**धुरन्धरोऽसौ विद्वान्**—पुराकाले पितरौ स्वस्य पुत्रस्य ऋषभत्वसिद्धये गुरुं प्रेषयेते स्म। गुरुश्च तथात्वसिद्धये समारोहपूर्वकं तं शिष्यमुपनयते स्म। गुरोरपि प्रयत्न आसीदनारतं—'कथं शिष्यो मे ऋषभत्वमवाप्नुयात्। शिक्षाप्राप्त्यनन्तरम् ऋषभत्वप्रात्यनन्तरं वा गुरुस्तं शिष्यमतीव प्रेम्णा धुरन्धरपदेन संबोधयति स्म। धुरन्धरशब्दोऽयं धुरं धारयतीति विग्रहेण ऋषभस्यैव वाचकः। अद्यत्वेऽपि 'धुरन्धरोऽयं विद्वान्, विद्वत्सु धुरन्धरः' इत्येवं बहवः प्रयोगा उपचर्यन्ते। नैतावदेव—'धुर्यः, धौरेयः' इत्यादिका अपि शब्दास्तस्मै व्यवह्रियन्ते[1]।

मातापितरावपि स्वगृहे पुत्रसमागमनोत्कौ धुरन्धरं तं नितरां प्रतीक्षेते स्म। 'नैकटिकस्तस्य विवाह' इति कृत्वा सर्वेऽपि परिजनास्तस्य वारं वारं स्मरन्ति स्म। कोऽन्यो धुरन्धरादृते सर्वथा विवाहयोग्यः स्यात्? विवाहशब्दस्य मौलिको व्युत्पत्तिलभ्योऽर्थस्तु 'विशेषेण वहनं रथस्य युगस्य वा' इत्येवास्ति। सर्वथा धुरन्धर-क्षममेवेदं कार्यम्। एको जीवनरथः यत्र वधूर्भवत्यूढा, नवोढा वा, पुरुषस्तु वोढा-स एवोच्यतेऽत्र विवाहशब्देन। 'ऊढा' शब्दोऽयं वह् धातोः कर्मणि क्त प्रत्ययेन निष्पाद्यते। अतः 'उह्यते

---

१. धुरो यड्ढकौ (पा० सू० ४।४।७७) सूत्रे शब्दाविमौ अनुशासितौ।

या सा' इति विग्रहेण वधूरुच्यते ऊढा शब्देन। विवाहे सति कस्ताम् ऊढारूपां वधूं वहति ? स्पष्टमसौ धुरन्धर एव, नातोऽन्यः कश्चित्। अत एव सर्वेषां परिजनानां भवति प्रयत्नः—सर्वथा पुत्रो मे धुरन्धरत्वमवाप्नुयात्।

**योग्योऽपि मूलतः वृषभ एव**—साम्प्रतं विदुषे पुरुषाय 'योग्योऽयं पुरुषः' इत्यादीनि वाक्यान्युपचर्यन्ते। परं योग्यशब्दोऽपि मूलतः वृषभार्थक एवेति पाणिनिसूत्रेणावबोध्यते। यतोहि 'योगाय प्रभवति' इति विग्रहेण शब्दोऽयं निष्पाद्यते।[1] 'युग्य' शब्दश्च 'युगं वहति' इत्यर्थे युगशब्दान्निष्पाद्यते।[2] योगशब्दः युगशब्दश्च मूलतो युगलायैव व्यवह्रियेते स्म। योगशब्दादेव सम्भूतः इंग्लिशभाषायां yoke शब्दश्चास्मिन्नेवार्थे प्रयुज्यते। वृषभयुगलस्य समौ पादौ 'युगपत्' शब्देनावबोध्येते स्म। तयोः साम्यं तथा प्रसिद्धं यत् यस्य कस्यापि यौगपद्यं 'युगपत्' शब्देन व्यवाहरन् जनाः।

एवंभूताय योगाय यः प्रभवति स योग्यः मूलतो वृषभ एवेति नास्ति कश्चन सन्देहः।[3] वृषभस्य योग्यताऽसौ तथा भुवि प्रसिद्धा यत् सकलमपि विद्वन्मण्डलं स्वं योग्यरूपेण मत्वा धन्यमात्मानं रचयामास !!

**वृषभत्वसाम्यं व्याकरणाध्ययनस्य प्रयोजनम्**—व्याकरणेऽपि महामुनिः पतंजलिः ऋग्वेदमन्त्रमुद्धृत्य महता प्रयत्नेन ऋषभत्वसाम्यमेव व्याकरणाध्ययनस्य प्रयोजनं प्रोवाच। तस्मिन् मन्त्रे 'महान् देवः वृषभः मरणधर्मान् मानवान् आविवेश' इति प्रोक्तम्। मन्त्रं च तं व्याचक्षाणः महाभाष्यकारः 'तेन महता देवेन वृषभरूपेण साम्यं नः यथा स्यादित्यध्येयं व्याकरणम्' इति वर्णयामास।[4] एवं वृषभरूपताऽसौ परमाशास्याऽऽसीद् वैयाकरणानामिति फलितं भवति।

---

१. द्रष्टव्यम्-योगाद्यच्च (५/१/१०२) इति पाणिनिसूत्रम्।

२. तद्वहति रथयुगप्रासंगम् (पा० सू० ४/४/७६)।

३. योग्यशब्दस्य वृषभत्वसिद्धये द्रष्टव्यम्—A Sanskrit English Dictionary—'Monier Williams' मध्ये योगशब्दः।

४. '……त्रिधा बद्धो वृषभो रोरवीति, महो देवो मर्त्या आविवेश' इति मन्त्रं वर्णयन् 'महता देवेन नः साम्य यथा स्यादित्यध्येयं व्याकरणम्' इति महाभाष्ये पस्पशाह्निके महामुनिः पतंजलिः।'

**महावीरः ऋषभदेवः**--जैनधर्मस्य प्रवर्तकः श्रमणमहावीरोऽपि ऋषभदेवरूपं स्वं नामधेयमघोषीत्। मन्ये—ऋषभस्य परा शक्तिः तस्य काष्ठाप्राप्तं यशोनिधानं तं देवं निकाममाकृक्षत्।

आधुनिके युगे देवोऽसौ हिन्दीभाषायां 'बैलदेव' रूपेण काममनूद्यतां तथापि न भवति तस्य यशसः कणिकाया अपि हानिः ! कथमेवं सम्मानितो वृषभः कदाप्यनादरं वृण्वीत !!

**गोतमः महामुनिः**—न्यायदर्शनस्य प्रवर्तकोऽपि न्यायशास्त्रेऽवहितः गौतमरूपेण भुवि परिवृढः। तस्य सुसूक्ष्मा बुद्धिः ऋषभत्वसाम्यं भजते स्म !! अतस्तस्य आर्षं शास्त्रं वस्तुत आर्षभं शास्त्रम् (ऋषभेण प्रोक्तम्) इति वक्तुं शक्नुमः !! महाकविः श्रीहर्षः न्यायदर्शने तस्यार्षभ्यां बुद्धिं यथाविधि ददर्श। तथा हि—

**मुक्तये यः शिलात्वाय यथा प्राहुः सचेतसाम्।**
**गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः॥**

अर्थात् यः महामुनिः सचेतसां मुक्तिं शिलारूपां ब्रवीति, स वस्तुतोऽन्वर्थं गोतमः वृषभ एव। मुक्तिरियं जीवस्य सर्वोच्चावस्थारूपेण मन्यते सूरिभिः। बद्धदशायां जीवः चेतनरूपेण तिष्ठति। अतः मोक्षदशायां तस्य जीवस्य ततोऽप्युच्चावस्थया भाव्यम्। परं न्यायदर्शनन्तु मुक्तिं शिलाशकलकल्पां ब्रवीति। अस्यां दशायां मुक्तिः सर्वोच्चावस्थितिरिति रिक्तं वचः !! कस्मै मनुजाय मुक्तिरियं मानोज्ञकमुपपादयेत्, को वा जन एवंभूतायै मुक्तये यावज्जीवं प्रयतेत ? अत एवं मुक्तिं विवृण्वानः मुनिः सत्यं गोतम एव।

महाभाष्यकारः पतंजलिरपि गोतरं वर्णयन् ब्रूते यत् योऽपि हि भारवहने महतीं काष्ठामाप्नोति स उच्यते गोतर इति। तथाहि—

'गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च।' (अतिशायने तमबिष्ठनौ ५/३/५५ सूत्रे महाभाष्यम्)।

अनया सरण्या शक्यं वक्तुमिदम्—'गोतमोऽयं यः शकटं वहति सीरं च न्यायदर्शनं च' !!!

**माहात्म्यं पुंगवस्य**—पूर्वस्मिन् काले गो शब्दोऽयं गां वृषभं च ब्रवीति स्म। उत्तरवर्तियुगेषु त्वनुभूतं पारेदृश्वभिर्विद्वद्भिः यन्महदन्तरमनयोर्धेन्वनडुहयोः। क्व धेनोः सारल्यं, क्व चानडुहः चाञ्चल्यं शक्तिमत्त्वं च। अतः धेनवे दारगवशब्दः प्रचारमाप, अनडुहे तु पुंगवशब्दः। पुंगवशब्दोऽयं पुनस्तथैव विदुषामलङ्कारः समजनि। सर्वोऽपि जनः स्वं पुंगवं मत्वा धन्यमात्मानं रचयामास। अतएव 'बाल्मीकिर्मुनिपुंगवः' (रामायणे), 'पण्डितपुंगवोऽयम्' इत्यादयः शब्दाः प्रथिताः लोके। प्राकृतास्तु शब्दमेनं स्वकीयायामशिष्टभाषायां 'पोंगा पण्डित' रूपेणान्ववदन् इत्यन्यदेतत् !! प्राकृताः पांसुलपादास्ते जना, तर्हि उपेक्ष्यतामेषा कथा !!

**पृथिव्या आधारः**—किमस्त्यतोऽप्यधिकं प्रमाणं वृषभस्य पराक्रमस्य यत् पृथिव्याः भारवहनप्रसंगे अपास्ताः सर्वेऽप्यहंमन्याः पशवः। केवलं वृषभ एव धुरो वोढा अग्रेसरो बभूव। अत एवाथर्ववेदे मुक्तकण्ठमिदं प्रोक्तम्—

**अनड्वान् दाधार पृथिवीमुत द्याम्—अथर्व ४/११/१।**

अर्थात्-अनड्वानेव पृथिवी द्यां च दाधार। अस्य भारवहने प्राथम्यमवेक्ष्यैव भगवतः शंकरस्य वाहनं वृषभ इति प्रवादः संगच्छते।

यथा तु 'अनड्वान्' शब्दस्य व्युत्पत्तिर्भणति तथा अनसः = शकटिकायाः भारवहनात् वृषभोऽयम् अनड्वानिति नामधेयं लेभे। धरित्रीयमपि सुमहती शकटिका यत्र सर्वेऽपि मनुजा सुखं शेरते। अस्याः शकटिकातुल्यायाः पृथिव्याः भारवहनादनड्वानिति नामधेयं सार्थकं सम्पद्यते।

अन्येषु मन्त्रेषु 'उक्षा दाधार पृथिवीमुत द्याम्, इति प्रोक्तम्। सेचनार्थकादुक्षधातोर्निष्पन्नोऽयं शब्द इंग्लिशभाषायां OX इति नामधेयं प्राप्तवान्। उक्षा हि धरित्रीभारवहनरूपाणां कामानां सेचनं कुरुते, वृषभश्च तथाभूतानां कामानां वर्षणं कुरुते इति विजयतां वृषभस्य माहात्म्यम् !!

एतेन सिद्धयतीदं यत् सर्वेषु विषयेषु धुरः वोढाऽयं धुरि कीर्तनीयः। क्षेत्रे कार्यं कुर्वाणः कृषीवलो वा स्यात्, पत्रे कार्यं कुर्वाणः कविर्वा-सर्वेऽपि

समं वृषभत्वं भजन्ते। अतः मम तु मतिरियं यत् सर्वैरपि जनैरनारतं वृषभत्वमनुमन्यताम् ॥

---

## दुर्लभश्च सुलभा च !!

क्वचन शब्दैरपि समाजस्य मनोभावाः ज्ञातुं शक्यन्ते यथा-यथम्। अस्य निदर्शनम्-दुर्लभशब्दः, दूल्हाशब्दश्च। अस्मिन्नर्थे वरशब्द आवैदिककालं भृशं प्रयुज्यते। परं प्राकृतानामासीदेष बद्धमूलो विचारः यदेवंभूतो वरस्तु दुःखेनैव प्राप्यते, दुर्लभ एव भवति। अतश्शब्दोऽयं दुल्लहरूपेण, दूल्हारूपेण च संज्ञारूपतां प्राप्य प्राकृते प्रकामं प्रयुज्यते। गाथासप्तशत्यां नायिकया प्रोच्यते यत् यदि ज्वरेणापि हेतुना प्रोषितो दुर्लभः मां समागच्छेत्, तर्हि ज्वरोऽपि नासाधु समुदाचरति। 'सुखपृच्छकं जनं दुर्लभमपि (दुल्लहमपि) दूरादस्माकमानयन्। उपकारक ज्वर जीवमपि नयन्न कृतापराधोऽसि'। (गाथासप्तशती १/५०)

कन्यानां कृते तु दुर्लभाशब्दस्संज्ञारूपतां प्राप्य संस्कृते, प्राकृते वा न क्वापि दृश्यते। सुलभाशब्दस्तु दृश्यते—महाभारतादिषु !!

# कृपणः कल्पते सदा

इह विश्वस्मिन् कृपणः प्रभूताय कल्याणाय कल्पते इत्यत्र नास्ति कश्चन सन्देहावतारः। कृपणोऽसौ धनं गोपायित्वा श्वःश्रेयसाय प्रभवति। दारिद्र्यं नाम सोच्छ्वासं मरणमिति तथ्यं वरं वेत्ति सः। अत एव स सर्वमपि सामर्थ्यं स्वमध्येऽभिरक्षति। कृपणशब्दोऽयं सामर्थ्यार्थिकात् कृप् धातोर्निष्पाद्यते। एवम् अर्थम् अनुधावता कृपणेन सर्वसामर्थ्यवता भाव्यम्।

वस्तुतस्तु कृपण एवायं सर्वेष्वपि जनेषु कृपां कर्तुं क्षमते। एवं 'कृपां करोतीति कृपणः' एवं केचन व्याचक्षते सूरयः[1]। कृपा हि भावः, तस्य कर्ता कृपण एव। एवं कृपा—कृपणयोः सुतरां शाब्दिकः सम्बन्धः, सुतमां च आर्थिकः सम्बन्ध इति सिद्ध्यति।

### उपनिषदि कार्पण्यनियमाः

प्राचीनेषु ग्रन्थेषु कृपणोऽयं सर्वत्र विविधैरुपायैः प्रशस्यते। मन्ये, कठोपनिषदि दानस्य ये नियमा उपवर्णितास्ते कृपणमधिकृत्यैव संप्रवर्तिताः। तत्र 'श्रद्धया देयम्' इत्यनेन सह 'अश्रद्धया देयम्, भिया देयम्, ह्रिया देयम्' इति प्रोक्तं विद्यते। वचनमिदं कथंकारं संगच्छताम्, को वा अस्य समीचीनं भाष्यं कुरुताम्, ऋते कृपणात्!!

तथाहि—यदा कश्चन कृपणः धनं गूहते, परं यदि कदापि तस्य व्रतं नाशयितुमुद्यतः दण्डोद्यतकरः पुरुषः धनं हठात् चिकीर्ष्यात् तदा 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः' इति वचनमनुरुन्धानेन तेन किंचित्तु देयमेव—एतत् सर्वं मनसि निधाय प्रोक्तम्—

### भिया देयम्

यदा तु केचनाशंसिनः 'सर्वेऽपि भवतां पूर्वपुरुषाः समतोषयन् अस्मान् दानेन, भवांस्तु कथं न किमपि ददाति' इत्येवं वारं वारं तं कृपणं ब्रूयुः

1. द्रष्टव्या—अमरकोषस्य सुधा—व्याख्या।

तदा स कृपणः लज्जया वन्ध्याः गाः वा, पुनरुत्स्यूतं वासो वा दद्यात् इत्येवं सर्वमाविष्कुर्वता तत्र प्रोक्तम्—

**ह्रिया देयम्**

अस्य निदर्शनमपि तत्रैव कठोपनिषदि यथायथं प्राप्यते। तथाहि—विदां वरेण्यः वाजश्रवसः वचनमदोऽनुपालयन् एवंभूताः गाः प्रददाति स्म—

**पीतोदकाः जग्धतृणाः दुग्धदोहा निरिन्द्रियाः।**
**आनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्॥**

**—कठोपनिषद् १/३**

**अर्पणं भवत्यल्पस्य**—वस्तुतस्तु अर्पणमिदं स्तोकस्यैव वस्तुनः सम्पद्यते, न प्रभूतस्य वस्तुजातस्य—इत्यत्रास्ति शब्दः प्रमाणम्। स्तोकार्थकः 'अल्प' शब्दोऽयं प्रदानार्थकेन 'अर्प' धातुनैव निर्मीयते। यदि चार्पणं न स्यात् स्तोकं तर्हि कथं स्यादर्प धातोरल्पशब्दस्य निर्मितिः? एषा निर्मितिस्तु अर्पणेन अल्पस्य स्वाभाविकं सम्बन्धमवद्योतयति।

**चोरणेन भवति प्रभूतं वस्तु**—अपि च सन्त्यन्येऽपि शब्दाः ये कार्पण्यं तर्पणकरम् इत्येवं प्रकाशयन्ति। शब्दप्रमाणका वयं, यच्छब्द आह तदस्माकं प्रमाणम्। एवं 'प्रचुर' शब्दः यथा ब्रवीति तथा 'प्रभूतं वस्तु चोरयित्वैव सम्पाद्यते' इत्येवम् अवगम्यते। अन्यथा कथं स्यात् बह्वर्थकस्य 'प्रचुर' शब्दस्य चुर धातोर्निष्पत्तिः?

वस्तुतश्चोरणम् अस्ति बहुप्रकारकम्। घनश्यामः भगवान् गोपवधूटीदुकूलं चोरयति। कविस्तु 'अन्यवर्णपरावृत्त्या बन्ध-चिह्ननिगूहनैः काव्यं चोरयति' इति महाकविः बाणः प्रभाषते[1]। एवं कार्पण्यसिद्धये प्रभूतप्रभावसिद्धये च चोरणं सर्वत्रैव स्वीक्रियते!! यदाऽन्येषां भागं बहुभिरुपायैः समाहरति कृपणः तदैव तस्य धनस्य प्राचुर्यम् अन्वर्थं भवति। तदैव तस्य सामर्थ्यं परिवर्धते, कार्पण्ये च सामर्थ्यम् उपयाति।

---

१. अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः।
अनाख्याताः सतां मध्ये कविश्चौरो विभाव्यते॥
हर्षचरिते प्रारम्भश्लोकः षष्ठः।

**स्वापतेयं धनम्**—धनस्य प्रायशस्सर्वाणि नामानि कार्पण्यं शिक्षयन्ति। एकं 'स्वापतेयम्' नामधेयम् अस्त्यस्य निदर्शनम्। अस्य व्युत्पत्तिः, यथा पाणिनिः ब्रवीति तथा 'स्वपतौ साधुः स्वापतेयम्' इत्येवं विद्यते।[1] एवं सिद्ध्यत्येवं यत् धनविषये स्वस्य पतित्वम् एव साधुतरं भवति।

**कृपणेन समः नास्ति दाता**

वस्तुतस्तु कृपणः स यो धनं न भुङ्क्ते, न च भोजयति। स तु धनं गोपायत्येव केवलम्। निधनान्तं तस्य धनं बहुभिरुपायैरभिरक्ष्यते। पश्चात्तु तद् धनम् अन्यैः सर्वैरप्युपभुज्यते। अतः कृपणस्य सर्वं कार्पण्यं पौत्रादिभ्यः प्रदानायालंकर्मीणं भवति। अतः वस्तुतः कृपणेन समः नास्ति कोऽपि दाता भुवि परिवृढः। यथा ह्युक्तम्—

**कृपणेन समो दाता भुवि कोऽपि न विद्यते।**
**अनश्नन्नेव वित्तानि यः परेभ्यः प्रयच्छति॥**

**कृपणकृपाणौ परस्परं नातिभिद्येते**—अन्यथाऽपि शक्यं कृपणस्य कार्पण्यं विचारयितुम्। स्तात्तस्य कार्पण्यं पौत्राणां प्रपौत्राणां वाभि-रक्षणाय। परं यावज्जीवं तु तस्य कार्पण्यं कष्टायैव केवलम्। स हि व्यथयति जनान् अनृतवाग्भिः, कृच्छ्रयति च तान् विविधदण्ड-प्रदानैः।

अत एकः कविसमयस्त्वेवं यत् कृपणोऽयं कृपाणान्नातिभिद्यते। शब्दसाम्यं धातुसाम्यं चापि तथ्यमेतदनुवदति। अन्तरं तु केवलमिदं तयोर्यत् कृपाणोऽयम् अमित्रेण चक्षुषा विनाशयति, कृपणस्तु मित्रेण चक्षुषाऽपि प्रियंभावुकतामुपदर्शयन्नपि विनाशयति। यथोक्तम् अस्मिन् श्लोके—

**दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य।**
**कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥**

**उभयोरपि दृढतरनिबद्धमुष्टित्वम्**—कृपणोऽपि दृढतरनिबद्धमुष्टि-र्भवति। कृपणोऽयं कोशस्य कुंचिकां दृढमुष्ट्या धारयति। 'गच्छन्तु नाम

१. द्रष्टव्यम्-पथ्यतिथिवसतिस्वपतेर्ढञ्—पा० सू० ४/४/१०४।

प्राणाः, परं मा स्म भूत् कदाचित् धनस्य प्रयाणम्—इत्येवम् अभिसमीक्ष्य सः सर्वं कालं सर्वं द्रव्यं दृढमुष्ट्या कुंचिकाबन्धं बध्नाति। एवंभूतं धनं श्वभिः संरक्ष्य सदा संवर्धनीयमिति तु निघण्टौ परिगणितेन 'श्वात्र' शब्देनावगम्यते।[1]

एवं कृपाणोऽपि दृढमुष्ट्या धार्यते, संग्रामे मनुजखण्डनाय। अतः द्वावपि दृढतरनिबद्धमुष्टी स्तः।

**द्वयोरपि कोशनिषण्णत्वम्**—एवं कृपणोऽयं कोशं गोपायन् सदैव कोशागारे निषण्णो भवति। क्वास्ति तस्य कृते स्थानमन्यत् विश्वस्मिन् ऋते कोशागारात्। एवं कोशागारमेव भवति तस्य विश्वम्। तस्मिन् कोशागारे तस्य विश्वं भवत्येकनीडम्।

कृपाणोऽपि कोशे खड्गपिधाने वा निहितो भवति। अतस्सोऽपि कोषनिषण्णः।

**सहजमलिनत्वं च द्वयोः**—एवं कृपणकृपाणौ द्वावपि सहजमलिनौ भवतः। कृपाणो ह्ययं प्रस्तरघृष्टोऽपि समयानुसारं सहजं मालिन्यम् उपयाति। सा चैव गतिः कृपणस्य।

अत एव धनाधिपतिः कुबेरोऽनुशब्दं मलिनरूपेणाख्यायते।[2] यस्याशोभनोऽस्ति बेरः=शरीरं स कथं न स्यान् मलीमसः!! एवम् अव्याजमलिनं भवति तस्य रूपं कृपणस्य कृपाणस्य च। एते सर्वेऽपि हेतवः कृपणकृपाणयोरैक्यं साधयतः।

---

१. द्रष्टव्यम्-निघण्टौ २/१० मध्ये धननामसु श्वात्रशब्दः।

२. कुत्सितायां क्विति शब्दोऽयं शरीरं बेरमुच्यते।
कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कितः॥
—वायुपुराणम्।

उसकी (कुबेर की) जो मूर्ति बनी वह मेरी (वैश्य) की थी—एक हाथ में तोड़ा (नकुली) दूसरे हाथ में शराब का प्याला लिये बनिये सी तुन्दिल···। ब्राह्मण तो पूजामात्र करता था, मैं वैश्य देवता बन पुज भी चला। (खून के छींटे इतिहास के पन्ने पर, भगवतशरण उपाध्याय—पृ० ९४।

तथापि स्वामी श्रेष्ठी इत्यादयः शब्दास्तु कृपणमेव प्रशंसन्ति कवि-काव्येषु। अस्य कारणमेवं यत् कृपणं विना न कोऽपि भूमिष्ठो जनः सामर्थ्यमतिक्रामति। अतः सुष्ठूच्यते यत्–'कृपणः कल्पते सदा' इति।

---

**पितृगृहं मा गमः !!**

विवाहानन्तरं परिणीता रमणी पतिगृहं स्थिताऽपि यदा कदा मातृगृहं प्रत्यावर्तते। परन्तु पितृगृहम् ? आः शान्तं पापम् !!! न कदापि पितृगृहं प्रति प्रयाति। यतो हि पितृगृहशब्दोऽयं यमसदनार्थे प्रयुज्यते।

वैदिके युगे पितृशब्दोऽयं जीवितपित्रर्थे प्रकामं प्रयुज्यते स्म। परं स्मृतिपुराणयुगे भ्रान्त्या सम्भ्रान्तानामासीदिदं मतं यदेष शब्दः मृतपितॄनेव ब्रवीति। अत एव पितृगृहशब्दः मृतपितॄणां गृहम्='यमसदनम्' इत्यर्थं प्रकाशते।

विभ्रान्तानां प्राकृतानां कृते तु नासीदेषा भीतिः। ते जीवित-पितॄणां गृहमित्यर्थे पितृगृहशब्दं प्रयुंजते स्म। अतएव पितृगृह-शब्दान्निस्सृतः 'पीहर' शब्दोऽद्यापि प्रचरति लोके। संस्कृते तु नास्त्येवमित्यहो शब्दानामिदानीं जिह्मा राजपद्धतिः !!

# हिरण्यमेतद् रमते हि रम्यम्

हिरण्यमिदं सदाऽनुनामधेयं हितरमणं समवर्ततेत्यत्र नास्ति काऽपि संशीतिः। प्रकामं चमत्कारि चात्यन्तं मनोहारि चेदं द्रव्यं सर्वकालं जनानाकृक्षत्। आपमरम् आपण्डितं च प्रतियुगं सुवर्णाय स्पृहा सन्दृश्यते।

हिरण्यं प्रति प्रीतेः प्रमुखं कारणम्-अस्याग्निसंकाशं सुवर्णं वर्णम्। केयूरं वा स्यात्, कटकं वा, कुण्डलं वा स्यात्, कंकणं वा-सर्वाण्यपि तापनेन खदिरांगारसवर्णानि सम्भवन्ति। सत्यम्, यथा यथा तानीध्यन्ते-ऽवदीप्यन्ते तथा तथा। यदा हि सर्वेषामपि वस्तूनामस्ति भस्मान्तं शरीरं, तापनेन सर्वे भावास्सन्ति भस्मावशेषाः, तदा स्वर्णमिदं तापनेन दीप्यते, अथ तु दीप्यत एव केवलम्। एषा स्थितिः कस्य नास्ति विस्मयायालम्। अत एव जनाः जातरूपम्, तापनीयम्, एवं विधानि बहूनि नामधेयान्याविरकार्षुः।

**सुवर्णम् अग्निसंकाशं जातरूपं कथं भवेत्**—'सुवर्णमिदम् अग्निसंकाशं रोचिष्णु कथं सम्पद्यते' इत्यर्थेऽनेके रोचका प्रवादा उपलभ्यन्ते। तथाहीदमस्ति शातपथं वचः—अग्नेरभिस्सह मैथुनं सम्मेलनं वा सम्बभूव। तेन मैथुनेनाप्सु वीर्यं परापतत्, तदेव हिरण्यमभवत्[1]। अग्नेस्सम्भवात् अग्निसंकाशं प्रदीप्तं स्वर्णं सन्तिष्ठते। वस्तुतस्तु लाक्षणिकमिदं वचनम्। अग्नेरपां च सम्मेलनेन आग्नेयं हिरण्यं समभवत् इत्येव हि तस्यार्थः। तैत्तिरीयब्राह्मणादिष्वप्येष प्रतिध्वनिरालक्ष्यते[2]।

परवर्तियुगेष्वपि सर्वे जनाः देवत्राचमेतां यथाविध्युपशुश्रुवांसः। सर्वाण्यपि कठोराणि द्रव्याणि पार्थिवत्वं धारयन्ति, सुवर्णन्तु न तथा—इत्येवमासीत् तेषां बद्धमूलो विचारः। एतामेव प्राचीनां वाचमनुहरन्तो

---

१. अग्निर्ह वा अपो अभिदध्यौ, मिथुनान्याभिः स्याम्। ताः सम्बभूव, तासु रेतः प्रासिंचत्, तद् हिरण्यमभवत्। तस्मादेतद् अग्निसंकाशम्।
—शतपथ ब्राह्मणम् २/१/१/५।

२. तैत्तिरीय ब्राह्मणम् १/१/३/८।

धीमन्तो दर्शनशास्त्रकारा अपि सुवर्णं तैजसं द्रव्यं समास्थिषत। न्याया-दिशास्त्रेषु सुवर्णस्य तैजसत्वं महता सम्भारेण विव्रियते।

**न्यायशास्त्रेषु सुवर्णस्य तैजसत्वम्**—तथाहि—सुवर्णम् अत्यन्तानल-संयोगेऽपि सति द्रवीभूय, वाष्पीभूय नैवोड्डयते नैव वोच्छिद्यते। परं यद् वस्तु तैजसं न भवति (पार्थिवम्, आप्यं वा द्रवं भवति) तत्सर्वमपि अग्निसंयोगेन वाष्पीभूय विनश्यत्येव केवलम्। सुवर्णन्तु नोच्छिद्यते, अत एव तत् पार्थिवाप्यभिन्नं तैजसमिति सिद्ध्यति[1]। अन्यैरप्यनुमानैः सुवर्णे पार्थिवादिविजातीयं तेजोद्रव्यं तत्राभिकल्प्यते।

आधुनिकविज्ञाननये तु सुवर्णस्य तैजसत्वं नास्ति साम्प्रतम्। आधुनिका वैज्ञानिकाः महता सम्भारेणोपनीतमपि सुवर्णस्य तैजसत्वं न स्वीकुर्वन्ति। यतो हि पूर्वो दर्शनशास्त्रप्रोक्तो हेतुः स्वरूपासिद्धहेत्वाभासे-नास्ति ग्रस्तः। अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानजन्यद्रवत्वं सुवर्णे पक्षे नैव सन्तिष्ठते। अत्यन्तानलसंयोगे सति सुवर्णद्रवत्वस्य सर्वथा उच्छिद्य-मानत्वात्। २९७०°C. इत्याख्ये भीषणे तापे सुवर्णस्य क्वथनस्य वाष्पीभवनस्य च प्रत्यक्षं दृष्टत्वात्। आधुनिके युगे नास्ति कश्चित् मृदोर्म्र-दीयान्, दृढाच्च द्रढीयान् पदार्थः यस्य क्वथनं, वाष्पीभवनं वा न स्यात्। सुवर्णमपि नास्त्यस्यापवादः। आधुनिके युगे विद्युच्चालितासु महतीषु धमनभस्त्रासु क्वथनमस्य सम्पाद्यते। पुराकाले नासीदेतावत्-तापप्रसार इत्यशक्यशंकम्। लौहोऽपि २७५०°C. इत्याख्ये तापे क्वथितुं, वाष्पी-भवितुं च शक्यते। परं सुवर्णन्तु अनेकशतभीषणभस्त्रासन्धुक्षणक्षुभितमपि लौहक्वथनसमतापोत्तप्तमपि न क्वथितुं शक्यते इत्यहो सुवर्णस्य सौवर्ण्यम्!! परं लौहतापादप्यधिके २९७०°C. इत्याख्ये महाभीषणे तापे तु सुवर्णमपि वाष्पीभूय उत्सन्नसंकथं भवत्येवेति सुवर्णस्य तैजसत्वं नेदानीमस्माभिरास्थेयम्। साम्प्रतन्तु सुवर्णमिदम् अन्यैः पार्थिवैर्द्रव्यैर्व्य-तिरिक्तं तत्त्वान्तरमेवेति सिद्धान्तयन्ति विदां वराः वैज्ञानिकाः।

**पीतं सुवर्णं पीतं पित्तलम्**—वैदेशिका अपि सुवर्णस्य पीतिम्ना परं प्रसादं प्राप्नुवन्ति स्म। इंग्लिशभाषायां gold इति शब्दः मौलिकरूपेण

---

१. सुवर्णं तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमान-जन्यद्रवत्वात्, यन्नैवं तन्नैवं यथा पृथिवी—

—मुक्तावली, तेजोनिरूपणम्

'पीतवर्णक' इत्यर्थक आसीत्। भारतीयास्तु केवलेन पीतेन वर्णेनासन्तुष्यन्तः अग्निसंकाशे पीते वर्णे मनो व्यदधुः। पीतन्तु पित्तलमपि भवत्येव। परं तत्तु पित्तमिव मलिनं सत् पित्तलमिति नामधेयं लेभे। एवं पित्तलं पुष्करे पातितं, सुवर्णस्य पताका त्वद्यापि दोधूयते इति विजयतां सुवर्णस्य माहात्म्यम् !!

**सुवर्णेन सभ्यताया इतिहासो विनिर्मितः**—वस्तुतस्सर्वत्रापि भूमण्डले सुवर्णेन सभ्यताया इतिहासो विनिर्मितः। सुवर्णस्य कृते रक्तरंजिताः महाहवाः, अरुष्कराः शस्त्रप्रहाराः, संख्यातिगाः वधाः, परस्सहस्रा राज्यसम्प्लवाः—सत्यम्, एषा कथा बहुधा साहित्यिकैः संकीर्तिताऽपि न कदापि पूर्णतामियर्ति[१]। सुवर्णस्य संरक्षणे समुत्पादने च सर्वदैव सुमहान् प्रयत्नः सन्दृश्यते।

अद्यत्वेऽपि महत्परिमाणं सुवर्णम् अमरीकादेशे सर्वाधिकेन सुरक्षाप्रबन्धेन सन्निधीयते। सुवर्णस्य कृते वसुमत्याः सर्वाधिकं गह्वरं छिद्रं निर्मितमनेन मनुजेन ! दक्षिण-अफ्रीका देशे सर्वाधिके गह्वरे ३ किलोमीटर परिमिते आकरे प्रविश्य जना स्वर्णम् उत्खनन्ति। एवं धरित्रीवेधने सर्वाधिकः प्रयत्नस्सुवर्णायैवेति किं नास्ति चित्रम् !![२]

**Chemistry नामकस्य शास्त्रस्य जन्म सुवर्णादेव**—इदमपरमस्ति चित्रं यत् Chemistry नामकं शास्त्रं सुवर्णादेव सम्भूतम्। मध्ये युगे

---

1. For the sake of gold, blood thirsty wars were waged, nations and states were annihilated and monstrous crimes committed. No words can adequately describe the sorrow and suffering caused by this beautiful yellow metal—Tales about metals-Page 174.

२. दुनियाँ का सबसे गहरा खान दक्षिण अफ्रीका में खोदा गया है। उसकी गहराई 3 K. M. से भी अधिक है। यह वह गहराई है, जहाँ आदमी पहुँच चुके हैं और काम कर रहे हैं। यह आधुनिक समाज का ही विशेष लक्षण है कि पृथ्वी में सबसे गहरा छेद जो हमारे ग्रह में प्रविष्ट होने के लिये मनुष्य का सबसे साहसी प्रयत्न माना जा सकता है, स्वर्ण की प्राप्ति के लिये बनाया गया है।

—मनोरंजक भौतिकी पृ० 156

कृत्रिमसुवर्णनिर्माणाय अहमहमिका सन्दृश्यते स्म। संख्यातिगाः दार्शनिकाः 'दार्शनिकानां प्रस्तरस्य' (=सुवर्णस्य, टिप्पण्यामुद्धृते पुस्तके सुवर्णस्य कृते Philosopher's stone इति नामधेयं दृश्यते) प्राप्तये संख्यातिगान् प्रयोगान् रात्रिन्दिवं विदधति स्म। विविधाः धातवो विभिन्नानि च वस्तूनि चानारतमग्नौ पच्यन्ते स्म। धातूनां स्वरूपं च परिवर्त्यते स्म। प्रक्रियैषा अरबीभाषायां कीमिया, कीमियागारी इति नामधेयं लेभे। अस्मादेव कीमिया शब्दात् Chemistry शब्दोऽस्तित्वमुपयातः।[1]

भारते देशेऽपि रसायनशास्त्रं सुवर्णादेव सम्भूतम्। अत्रापि सुवर्णस्य कृते सुमहदनुसन्धानं सन्दृश्यते। अनेकेषु ग्रन्थेषु सुवर्णनिर्माणायानेके रसायन प्रयोगास्संग्रथितास्सन्ति[२]।

**स्वर्णं सुवर्णं रजतं तु दुर्वर्णम्**—यद्यपि रजतमपि वर्तते मनोरंजकम्। तत् प्राप्यापि जनाः नन्दन्ति च गायन्ति च। रूप्यम्, रूप्यकमित्यादिबहुविधैः प्रशंसनीयैश्शब्दैस्सम्बोधयन्ति च[३]। परं सुवर्णसम्मुखन्तु नेदं स्थातुं क्षमते। रजतमिदं तावदेव रंजकं यावत् स्वर्णस्य नोदयः। सुवर्णस्य=शोभनवर्णकस्य सुवर्णस्यावस्थाने तु रजतमिदं दुर्वर्णमेवेत्यनुशब्दप्रमाणं वयं मन्महे[४]।

**अहो कार्तस्वरं सुवर्णम्**—सुवर्णमिदं 'कार्तस्वरम्' इति साभिप्रायेण

1. Latin—Alchimia—from Arabic—Alkimia..... = art of transmuting metals
   —Oxford English Dictionary मध्ये Alchemy शब्दः।
२. ताम्रे लोहे तथा रीत्यां तारे खर्परसूतके।
   तत्क्षणाद् वेधमायाति दिव्यं भवति कांचनम्।
   —सुवर्णतन्त्रम् श्लोकः २४
३. पूर्वम् रजतनिर्मितत्वात् भारतीयमुद्रा रूप्यकमिति प्रोच्यते स्म। इदानीं तु रुप्यकशब्दान्निःसृतः 'रुपया' शब्दः पत्रमुद्रार्थे व्यवह्रियते इत्यहो चित्रम्!!
४. अलंकारसुवर्णं यच्छृंगी कनकमित्यदः।
   दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि॥
   —अमरकोशः।

शब्देनाप्यभिधीयते स्म। यतो हि कृतस्वराय=वेदपाठं कुर्वाणायेदमवश्यं प्रदेयमिति वैदिकाः मन्यन्ते स्म। उच्छ्वासान्तेऽपि येषां वक्त्रेऽखिन्ना सरस्वती ते कथं न सुवर्णेन सत्कार्याः स्युः! अतिप्राचीनकालादेष विचारः सत्यं सन्तिष्ठते। तथा हि-शतपथब्राह्मणानुसारेण—सुवर्णमिदम् अग्निप्रभवम्, अतोऽग्निना यजनशीलाय पुरोहितायैतदवश्यं प्रदेयम्[1]।

बहुभिरर्थवादैः कथाभिश्च 'सुवर्णमेव दक्षिणासु प्रदेयं, न तु रजतम्' इति जना अवबोध्यन्ते स्म। यथा एकस्मिन् प्रसंगे तैत्तिरीय ब्राह्मणे (१।५।१।२) 'बर्हिषि रजतं न देयम्' इति रजतदानं निषिध्यते। निषेधोऽयम् अर्थवादविधिनैवं यजमानायावबोध्यते स्म[2]—

अये सुत्वन्, यज्वसु श्रेष्ठ! पुराकाले रुद्रोऽयं महता कण्ठेनारोदीत्। एतदेवासीत्तस्य रुद्रस्य रुद्रत्वम्। तस्य स्वच्छे कपोले पतितान्यश्रूणि रजतरूपाण्यासन्। एवं च रजतमिदम् अश्रुभ्यो नातिभिन्नम्। रजतदानं वस्तुतोऽश्रुदानमेव। तत् किन्नु खलु यजमान! त्वं पुरोहिताय रजतं दत्त्वाऽश्रूणि प्रदास्यसे? अतो न कदापि रजतं प्रदेयम्, अपितु अग्निना यजनशीलाय अग्निसंकाशं सुवर्णमेव प्रदेयम्। एवं च सुवर्णमिदं सर्वेभ्यो रोचते स्मेत्यत्र नास्ति सन्देहसन्दोहः।

**क्वचित् कार्तस्वरं, क्वचित् आर्तस्वरम्**—सुवर्णमिदं सर्वदैव श्रीमताम् अलंकार आसीत्। एकतो महाराजसद्मसु सुवर्णवर्णानामलंकाराणां पंक्तिर्न कदापि समाप्तिमेति स्म। अपरतस्तु कांचनमिदं न कदापि कंचन दरिद्रमुपैति स्म। आर्थिकं महद्वैषम्यमिदं साम्यरूपेण समुपवर्णयति कविरेवम्—

> **पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।**
> **बिलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्॥**

**सम्पत्तिपक्षे श्लोकस्यार्थः**—राजसदनं पृथूनां कार्तस्वराणां पात्रं वर्तते। अथ च तेन कार्तस्वरेण भूषिताः निःशेषपरिजनाः यत्र तथाभूत-

---

१. शतपथब्राह्मणम् २।२।३।२८।

२. कथैषा एतद्वचनमाश्रित्य लिखिता वर्तते—'सोऽरोदीत् इत्यत्रापि रजतस्य पतिताश्रुरूपत्वात् रजतदाने गृहेऽपि रोदनप्रसंगात् 'बर्हिषि रजतं न देयम्' इति तन्निषेधेन विधेयेनार्थवादस्यैकवाक्यत्वम्—
—सायणाचार्यकृता ऋग्वेदभाष्यभूमिका पृ० ४६

मपि सदनमेतत् संवर्तते। अथ च विलसद्भिः करेणुभिश्च गहनमेतत् सदनम्।

**विपत्तिपक्षे श्लोकस्यार्थः**– पृथुकानाम् आर्तस्वराणाम्=विलपतां बालकानां पात्रमेतद् गृहम्। अथ च भुवि उषिताः निःशेषपरिजना यत्र तथाभूतमेतद् गृहम्। अथ च बिले सीदतां मूषकाणां रेणुभिर्गहनमेतद् गृहम्।

एवं च क्वचिदासीन् नन्दनं सुवर्णानां, क्वचित्तु क्रन्दनं विवर्णानाम्। एकतश्शतकुम्भेषु संग्रहणात् सुवर्णमिदं शतकुम्भमिति संज्ञां लेभे। अपरतस्तु कुम्भ्यामेव धान्यसंग्रहेण जीविकाचरणात् 'कुम्भीधान्या जना' इति प्रवादः प्रचचार।

कार्तस्वराणाम् आर्तस्वराणां च समाजे सहैव समवस्थानं किं नासीच्चित्रम्!!

---

# अथातो गोमयवृत्तं व्याख्यास्यामः

भारतीयसंस्कृतौ गोमयमिदं सर्वातिशायि महत्त्वं भजते। अत्र नान्यद् वस्तु ऋते गोमयात् यत् पुरीषमपि स्यात् पवित्रतममपि !! अस्य पवित्रता तु सर्वैरपि स्वीक्रियते प्रतियुगम्। यदि भवान् गृहं पवित्रं कर्तुं कामयते तर्हि गोमयस्य लेपनं कुरुताम्। वायुशुद्धावभीप्सितायां तु अस्यैव गोमयस्य धूपनं विधेयम्। गोमयेनानुलिप्ता भूमिः 'शकपूत' इत्येवं प्रोक्ता वेदे[1]। धूपनस्य च तत्रैव वेदे विधानं कृतम्[2]। एवंभूतेन धूमेन धूपितो द्विजः 'शकधूम' इति सम्मानितेन शब्देनाभिधीयते स्म। यतो हि शकधूमेन तस्य द्विजस्य तादात्म्यं सम्पद्यते स्म[3]।

**इतिहासः गोमशब्दस्य**—गोमयशब्दोऽयं गोशब्दात् पुरीषेऽभिधेये 'गोश्च पुरीषे' ( पा. सू. ४/३/१४५ ) इति सूत्रेण, गोः पुरीषमिति विग्रहेण मयट् प्रत्ययद्वारा निष्पाद्यते। अतः पाणिनियुगे शब्दस्यास्य पुरीषार्थः सुनिश्चितः।

परं पूर्ववर्तियुगे तु नासीदयमर्थः। तस्मिन् युगे तु गोमयशब्दोऽयं गवां भूमत्वमभिप्रैति स्म। भूम्न्यर्थे मयट् प्रत्ययं पाणिनिरपि तत्प्रकृत-वचने मयट् ( पा. सू. ५/४/२१ ) इति सूत्रेण प्रत्यज्ञासीत्। तथाहि अन्नं प्रकृतमित्यर्थे 'अन्नमयम्' इत्यादयः बहवः प्रयोगाः निष्पद्यन्ते। अतः

---

१. ऋग्वेदः /१०/१३२/५

२. अश्वस्य त्वा वृष्णः शक्ना धूपयामि।

—यजुर्वेद ३७/९

३. शकृतः सम्बन्धी धूमो यस्मिन्नग्नौ स शकधूमः अग्निः। तदभेदाद् ब्राह्मणोऽत्राभिधीयते।

—अथर्ववेदे ६/१२८/१ इति मन्त्रे सायणाचार्यः।

बहुलगवात्मकं धनमित्यर्थे 'गोमयं वसु' इति प्रोक्तं वेदे[1]। परवर्तियुगेषु त्वनुभूतं यत् गोः प्राचुर्यं तस्य गोमयस्य बाहुल्येनाभिलक्ष्यते। अतो बहुलगवार्थकः गोमयशब्दः पुरीषार्थकः समपद्यत। अहो निस्सीमता नीचैर्गमनस्य! 'गोमयं गृहम्' इति वाक्ये यदेव गोमयं पूर्वं गृहे गवां बाहुल्यं द्योतयति स्म तदेवेदानीं गृहे पुरीषं बंहयंतीत्यहो दारिद्र्यं बुद्धेः!! महाभाष्यकारमुखेन तु क्वास्ताः क्व निपतिताः, क्व गवां बाहुल्यं, क्व च गवां पुरीषम्!!!

परं विचारसरणिरन्यथाऽपि शक्या कर्तुम्। एतद्धि गोः पुरीषस्य माहात्म्यं यत् गोमयशब्दोऽयं तदर्थकः संवृत्तः। निभाल्यताम्, पंचगव्येषु गोः पयसा दध्ना च सहैव तथैव पवित्रया बुद्ध्या तस्याः पुरीषमपि गण्यते। अतस्तस्य महत्त्वं न कथमपि न्यूनं संजाघटीति।

**शाकपूणिर्महात्मा**—एतदेवात्र कारणं यत् शास्त्रेष्वधीतिनः, वेदेषु कृतिनः पुरीषपूर्णतया स्वेषां चारितार्थ्यं मन्वते स्म। निरुक्तशास्त्रे व्युत्पत्तिकारेष्वग्रगण्यः शाकपूणिर्नाम महामनास्सन्तिष्ठते। स हि शकपूर्णतया धन्यमात्मानं मन्यते स्म। एषा कथाऽस्य नाम्नि लिखिताऽस्ति। यतः शाकपूणिशब्दोऽयं शकपूर्णि शब्दस्यैव प्राकृतं रूपम्[2]।

**करीषगन्धेः कन्यायाः ख्यातिः**—प्रायश इयमेव कथा करीषगन्धिशब्दस्य विद्यते। पाणिनिकाले प्रसिद्धोऽसौ प्रवयाः महामनाः स्वकीयां कन्यामेकामभिरक्षति स्म। साऽपि लोके तथैव प्रसिद्धिमाप। पितुः प्रसिद्धेः कारणं तस्य शरीरस्य करीषस्येव गन्धवत्त्वमासीत्। एतद्धि तस्य 'करीषस्य गन्ध इव गन्धोऽस्य' इति विग्रहवता करीषगन्धिसंज्ञया ध्वन्यते। तस्याः कन्यायास्तु तथा प्रसिद्धिरासीत् यत् तस्याः 'कारीषगन्ध्या' इति विशेषनाम्नः परिग्रहार्थं पाणिनिना विशेषसूत्रं निरमायि[3]।

---

१. य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे बलम् इति ऋग्वेदस्य १०/६२/२ मन्त्रे 'यूयं गोमयं=गवात्मकं पणिभिरपहृतं वसु=धनम् उदगमयन्' इति सायणाचार्यः।

२. द्रष्टव्यम्—मोनियर-विलियम कृते शब्दकोशेशाकपूणिशब्दः।

३. अणिञोरनार्षयोर्गुरूपोत्तमयोः.....।

—(पा. सू. ४/१/७८)

**करीषी मानवः महात्मा वा महामनाः वा**—एतेन करीषवता पुरुषेण किं संसूच्यते, सम्पत्तिर्वा, विपत्तिर्वा ? वस्तुत आधुनिकशोधस्यायं विषयः। क्वचन सम्पत्तिरनेन भण्यते। एकत्र लक्ष्म्याः विशेषणं 'करीषिणी' इति प्राप्यते। एतेनावश्यं तया सम्पत्तिदेव्या करीषवत्या भाव्यम्। परं क्वचन करीषवत्त्वमिदं दरिद्रताया अनुमापकम्। प्रसार्यतां गाथासप्तशती—

**सूच्यते हेमन्ते दुर्गतः करीषाग्निगन्धेन।**
**धूमकपिलेन परिविरलतन्तुना जीर्णपटकेन॥**

अर्थात् शीतकाले विपन्नः कश्चन पुरुषः करीषाग्निगन्धेन संसूच्यते। यतो हि शीतत्राणाय करीषाग्निरेव भवति तस्य शरणम्। करीषाग्निधूमेन कपिलानि वस्त्राण्यपि तस्य दरिद्रताया अनुमापकानि भवन्ति। महर्षेः दुर्वाससः वस्त्राणि 'किं करीषाग्निधूमेनैव मलिनान्यासन्' इति पुनः शोधस्यायं विषयः। दुर्वाससः मलिनवस्त्रत्वं 'दुर्गतानि वासांसि यस्य' इति विग्रहवता नाम्नैव ध्वन्यते। तेषामृषीणां गृहेषु महान् गोमयनिकायः[१] संप्रवर्तते स्म। यथा हर्षचरिते 'इन्धनगोमयपिण्डकूटसंकुटानि' इत्येवं व्यवृणोत् कविः[२]।

**शकंभरः किं ब्रवीति** -सन्त्यन्येऽपि शब्दा ये गोमयस्य माहात्म्यं वक्तुं क्षमाः। यथा शकंभरः शकधरो वा। शकंभरस्य प्रयोगः अथर्ववेदे ५/२२/४ मन्त्रे दृश्यते। (शकंभरस्य मुष्टिहा पुनरेतु महावृषान्)। साम्प्रतं हिन्दीभाषायां शब्दाविमौ 'गोबरभर' रूपेणानूद्येतां, का नो हानिः !!

हिन्दीभाषायां प्रवर्तितस्य 'छगनलाल' इति नामधेयस्यापि 'गोबरलाल' इत्येष एवार्थः। यतो हि 'छगन' शब्दोऽयं गोमयार्थकात् 'शकन्' शब्दादपभ्रष्टः।

---

१. निवासचिति'.........., 'संघे चानौत्तराधर्ये (पा. सू ३/३/४१-४२) इति सूत्रयोः प्रमाणेन सभ्यानां मनुष्याणां संघः 'निकाय' इत्युच्यते। पशूनां संघस्तु गोनिचयः, 'सूकरनिचय' इत्युच्यते। परमहो गोमयस्य माहात्म्यम् ! गोमयस्य समूहस्तु वैयाकरणनिकाय इव 'गोमयनिकाय' इति प्रोच्यते।

२. हर्षचरितम्, द्वितीय उच्छ्वासः।

**इतिहासः गोबरशब्दस्य**—हिन्दीभाषायां गोमयार्थे 'गोबर' शब्दः प्रयुज्यते। अयं 'गोबर' शब्दः न गोमय-शब्दात् विकासं प्राप्तः। तत्रैवं ध्वनिपरिवर्तनाऽसम्भवात्। शब्दोऽयं ध्वनिसाम्यात् संस्कृतात् 'गोर्वर-शब्दान्निष्पन्न इति वयं प्रतीमः। 'गोर्वर' शब्दस्य साहित्ये नातिप्रचुरः प्रयोगः। परं तथापि भावप्रकाशादिग्रन्थेषु द्रष्टुं शक्यते। श्रमण-महावीरस्य प्रथमगणधरस्य निवासस्थानमपि 'गोर्वरग्राम' आसीत् इत्येवं जैनग्रन्थेषु प्रोच्यते। वस्तुतश्चित्रीयितं गोमयस्य माहात्म्यम् अनेन गोर्वर-शब्देन। शब्दोऽयं न दधिपयसी अपितु गोः पुरीषं वररूपेण ब्रवीति !! अस्मादेव शब्दात् हिन्दीभाषायां गोबरशब्दः निष्पन्नः।

इदमस्त्यपरं गोमयस्य माहात्म्यं यत् शकटं शकृता लक्ष्यते। शकट-मिदं महान्तं भारं वोढुं शक्नोति। अतश्शक्तेऽर्थे शकटस्य व्युत्पत्तिस्सम्भ-वत्येव। यथा परवर्ति—वैयाकरणा अपि मन्वते[1]।

परं यास्काचार्याणां तु मतमिदं यत् शकटं शकृताऽभिलक्ष्यते[2]। शकटे वर्तमानं चक्रं वा, ध्वजो वा, धूर्वा न शकटं स्पष्टं लक्षयितुमुपक्रमते। अपितु इदमस्ति गोमयं गोमयाभिषंञ्जनं वा यत् शकटं विवरीतुं सर्वथा क्षमते। शकटं वृषभो वहति, अतस्तत्र गोमयाभिषंजनं सामान्यम्। एवं शकटं गोमयेन परिज्ञायते इत्यस्ति गोमयस्य माहात्म्यम् !!

एवम् अनितरसाधारणं माहात्म्यं गोमयस्येति सर्वथा वक्तुं शक्नुमः॥

---

१. शकटम्-शक्नोति भारं वोढुम्—अमरकोशे शकटशब्दस्य सुधा व्याख्या।

२. शकटं शकृदितं भवति।

—निरुक्त ६/२१

# मत्तो जातः सुरापायी

वचनमिदं क्रतुक्रियाव्याख्याने व्यतीतपुरुषायुषस्य मीमांसकमण्डनस्य मण्डनमिश्रस्य। स हि शास्त्रार्थावसरे वाक्येनानेन शंकराचार्यं मत्तं ब्रूते। अद्वैतव्याख्याने गाढं प्रतिपन्नः विजिताशेषभूमण्डलः शंकरस्तु मण्डनम् उत्तरयत्येवम्—

**'सत्यं ब्रवीति पितृवत् त्वत्तो जातः सुरापायी'[1]।**

स्पष्टमत्र मत्तशब्दस्यार्थं परिवर्तयन् मण्डनं सुरापायिपुत्रस्य पितरं प्रोक्तवान्। अन्येषु प्रश्नप्रतिवचनेषु मण्डनाचार्यः पृच्छति—

**'अहो पीता भवता किमु सुरा'?**

शंकराचार्यस्तु श्लिष्टार्थमाश्रित्य प्रत्युत्तरयति—

**'नैव श्वेता यतः स्मर'**

सुरेयं नास्ति पीतवर्णा अपितु श्वेतवर्णा इति मीमांसां स्मर। दुग्धाशिरा दध्याशिरा वा भवत्येवेयं श्वेतवर्णा[2]।

पुनश्च मीमांसकमण्डनः मण्डनाचार्यः चमत्कृतिपराधीनचेता एवं ब्रवीति—

**'किं त्वं जानासि तद् वर्णम्'?**

शंकराचार्यस्तु गण्डकस्योपरि पिण्डकं संवर्तयन् एवं प्रत्युत्तरयति—

**अहं वर्णं भवान् रसम्।**

---

१. श्लोका इमे शंकरदिग्विजयतस्समुद्धृताः।

२. सोमोऽयं दुग्धेन दध्ना च सह पीयते स्म। पेयमिदं दुग्धाशीः, दध्याशीः वा शब्देन प्रोच्यते स्म। इदं पेयं 'इन्द्राय गाव आशिरम्' (ऋग्वेदः ८/६९/६) आदिभिर्बहुधा अस्तूयत। इदं जनेषु तथा स्पृहणीयमभूत् यत् सकलमपि वरप्रदानम् आशीः शब्देन प्रोच्यत लोके॥

एवं वेदान्तशास्त्रे प्रणिहितमना नैष्ठिकः सुराया वर्णं निभालयति, मीमांसाशास्त्रैकचेतास्तु तस्या रसमन्विष्यति। मन्ये सुराया वर्णस्यान्वेषकत्वादेव वर्णिनस्ते वेदान्तिनः, सुरापायित्वात्तु सोमसुतस्ते मीमांसकाः। सौत्रामण्यां सुरापानस्यावश्यकत्वात्। एवं वेदान्तस्य मीमांसायाश्च महता सम्भारेण प्रोक्तः शास्त्रार्थः वस्तुतः सुरादर्शनस्य सुरापानस्य च विवादः!

दर्शनं वा स्यात् पानं वा, अभीप्सिता त्वियं द्वाभ्यामपि। केचन दर्शनविधयाऽस्यै स्पृहयन्ति, अपरे तु पानविधया। सुराशब्दस्तु यथा भणति तथा सुराणां सर्वेषां कृते वन्दनीययाऽनया भाव्यम्। साम्प्रतं सुरागन्धकषायितचेतसः कामम् ऊर्ध्वबाहुर्विरौतु यन्मलिनमनसां मनुजानामियमस्ति वस्तु, परं सुराशब्दस्तु सुराणामेव ब्रवीति। अन्यथा कथमियम् असुरारूपेण न प्रोक्ता स्यात्!!

वस्तुतश्शब्दास्तु अन्यामेव कथयन्ति कथां देवानां दानवानां च। अस्माकमस्ति शब्देषु प्रत्ययः। महाभाष्यकारमुखेन तु—शब्दप्रमाणका वयं, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दस्तु राक्षसं रक्षकं ब्रवीति, इन्द्रं तु पुराणां दारयितारं पुरन्दरम् इति' !!

सुराया अपि नामानि कथयन्त्येवास्याः कथां मुक्तकण्ठम्। इयं विजया वा स्यात्, वारुणी वा, मातुलानी वा—सर्वत्रैवास्याः प्रियंकरणता समुद्घोष्यते।

**इयमस्ति विजया**—सर्वदा विजेतृत्वात्। अस्याः पानेऽत्यन्तीनं विजयं प्राप्नोति मनुजः। अस्याः पाने जितरणो भवति भाग्यशाली, पानपरिहीणस्तु रणजितो भवति भाग्यहीनः[1]! अस्याः पानेन अस्ति—शक्तिरिन्द्रः सर्वानपि वीरानतिक्रमते। अलौकिक्याः शक्तेः प्रमाणं विद्यतेऽस्मिन् मन्त्रे—

> हन्ताहं पृथिवीमिमां निदधानीह वेह वा।
> कुवित् सोमस्यापामिति॥　　ऋग्वेद १०/११९/९

---

१. जितरणः—विजितः रणः येन सः—विजेता इत्यर्थः। रणजितः-रणे जितः-पराजित इत्यर्थः।

'इदानीमहमस्मि सोमपायी पुरन्दरः। वदत यूयम्, अहं पृथिवी-मुत्थाप्य तत्र स्थापयानि, अत्र वा।' कोऽन्यो जनः ऋते सोमपीथात् एवमतिमानवीं वाचं वक्तुं क्षमते! अतो नात्र कापि संशीतिर्यदियं विजया।

**इयमस्ति मातुलानी**[1]—अतः सर्वथेयं परिग्रहणीया। विभिन्नेषु यज्ञेषु सुरामिमां जनाः परिगृह्णन्ति स्म। परं कतिपये जनास्तु सुराया दूरं पलायन्तः एवंभूतानां यज्ञकर्मणामनुष्ठानाय भाटकरूपेण जनान् स्थापयन्ति स्म। 'असौ जनः भाटकभृतः पिबतु सुरां, यज्ञं चाहं विदधानि'—एवं कतिपये यजमानाः चिन्तयन्ति स्म। तान् निवारयन् शतपथब्राह्मणकारः ब्रवीत्येवम्—

तद्धैतदन्येऽध्वर्यवः राजन्यं वा वैश्यं वा परिक्रीणन्ति, स एतद् भक्षयिष्यति, तदु तथा न कुर्यात्। —शतपथब्राह्मणम् १२।८।१।६

'कतिपयेऽध्वर्यवः राजन्यं वा वैश्यं वा धनादिभिः परिक्रीणन्ति। स हि सुरां पास्यति, यज्ञं चास्माकं पूरयिष्यति। परं न ते तथा वर्तन्ताम्।' एवं स्पष्टमादिशति शतपथब्राह्मणकारः।

**'सोमसुरे नात्यन्तं भिद्येते'**—प्राचीनेषु ग्रन्थेषु सोमस्य, सुरायाश्च पानं विहितम्। यद्यपीदानीं सोमोऽयं न सर्वथा विनिश्चितः। तथापि सोमसुरे नात्यन्तं भिद्येते, इत्यत्रास्ति प्रमाणम्। ब्राह्मणग्रन्थेष्वेकत्र 'देवानां परममन्नं सोमः, मनुष्याणां तु सुरा' इति प्रोक्तं विद्यते[2]। यदि तावत्यन्तं भिद्येयातां तर्हि कथन्तयोरेकत्र वर्णनं स्यात्। भवतु नाम सुरायां किंचन सोमापेक्षया नैयून्यम्। परं नैतावन्नैयून्यं सोमसुरयोः साजात्यमवरुणद्धि। यदि सोमो प्रतमां विजयते, तर्हि सुरेयं प्रतरां विजयते। एतावता तौ नातिभिन्नौ सिद्ध्यतः।

**प्रमादः सोमेनापि सुरया चापि**—सोमोऽयं मदयति मनुजस्य चित्तम्, मोदयति मानवस्य मानसम्, हर्षयति च तस्य हृदयम्। सुराऽपि तथैव

---

१. अमरकोशे २/२० स्थाने 'मातुलानी तु भंगायाम्, इत्यर्थ उपलभ्यते।

२. एतद्वै देवानां परममन्नं यत् सुरा-तैत्तिरीय-ब्राह्मणम् १/३/३/३/ एतेन सोमसुरयोः परमान्नत्वं सामान्यमिति सिद्धयति। पुमान् वै सोमः स्त्री सुरा—तै. ब्रा. १/३/३/४।

मदयति च, मोदयति च, हर्षयति च। परं परवर्तिजनानान्तु आसीदियं विचित्रामतिर्यत् सोमस्य प्रसंगे मदशब्दो वा प्रमादशब्दो वा आनन्दमर्थं ब्रूते। सुराप्रसंगे तु स एवालस्यं ब्रूते। ऋग्वेदे प्रमादशब्दोऽयम् आनन्दकरस्य सोमस्य वाचकः[1]। अनेनैव प्रमादेन प्रमत्तः इन्द्रः पूर्वोक्तं (हन्ताहं पृथिवीम्...) मन्त्रं प्रोवाच। मन्त्रमिमं ध्यायं ध्यायं प्रशंसन्ति जनाः। परमिदानीं सुरया प्रमत्तं पुरुषम् अक्षिनिकाणं जल्पन्तीत्यहो अधन्यता भागधेयस्य।

**मत्सरस्य मौलिकोऽर्थः**—पूर्वं ऋषयः सोमं मदस्य सर इति रूपेणाब्रुवन्। यतो हि स हर्षप्रकर्षं वर्धयति स्म। इदं मदस्य सरः मत्सररूपेण प्रोच्यते स्म[2]। शब्देऽस्मिन् दकारस्याकारो विलुप्तः। अप्सरा शब्दसादृश्येनाकारान्तोऽयं शब्दः समपद्यत[3]। एवं सोमपायिनः मदसुधामहाह्लदावगाहिनः कुशलाः समभूवन्, बुद्धौ च तेषां वैशद्यं मात्सर्यं वा समुदपद्यत। परं परवर्त्तिकालेषु तु सुरापायिनः मत्सरा अन्धतमसा वा समभूवन् बुद्धो च तेषां मात्सर्यं मालिन्यं वोदपद्यत। किमियमेवास्ति न्यायसमीचीना पद्धति? वैशद्यार्थको मात्सर्यशब्द इदानीं मालिन्यं द्योतयतीत्यहो बुद्धेः पराभवः। आनन्दपूर्णे सरसि स्नातुमनाः पुरुष इदानीं पंकमलिने सरसि स्नातीत्यहो बुद्धेः पराजयः!![4]

---

१. इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति। यन्ति प्रमादमतन्द्राः।
ऋग्वेद ८/२/१८

२. गोभिः श्रीणीत मत्सरम् (ऋग्वेद ९/४६/४) इत्यादिषु बहुषु मन्त्रेषु मत्सरशब्दोऽयं सोमस्य वाचकः। निरुक्तेऽपि २/४ स्थाने 'मत्सरः' सोमो मन्दतेस्तृप्तिकर्मणः। एवं मत्सरशब्दं सोमार्थकरूपेण व्यवृणोत्।

३. सरणिरियं 'दमस्य पतिः दम्पतिः' आदिशब्देष्वपि दृष्टा। यद्यपि अप्सरस् शब्दोऽस्ति सकारान्तः। परमथर्ववेदे ४/३७/७ आदिस्थानेषु 'अप्सरापतिः' इति प्रयोगदर्शनेनाकारान्तोऽयं समवर्ततेति ध्वन्यते। एवं मत्सरशब्दोऽप्यकारान्तः समवर्तत। उणादिषु तु व्युत्पत्तिरन्यथा प्रवर्तिता।

४. पूर्वं वैशद्यार्थको मात्सर्यशब्द इदानीं मालिन्यं द्योतयतीत्यत्रैवास्तीदं व्यंग्यम्।

**कथमुत्सवोऽसौ समवर्तताग्रे**—पुराकाले सोमाभिषवणसमयः महतो प्रमादस्य प्रमोदस्य वा प्रसंगो भवति स्म। तस्मिन् काले जनाः नन्दन्ति स्म, गायन्ति स्म, नृत्यन्ति स्म। सर्वेऽप्येवं संप्रवदन्ते स्म यदिदानीं नः सोमपानं संवर्तताम्, इदानीं नः वाङ्मनसे संवर्धताम्, !! अवसरोऽयम् उत्सवशब्देन प्रोच्यते स्म[1]। इदानीन्तु सर्वोऽप्यानन्दपूर्णोऽवसर उत्सव-शब्देनाभिधीयते इति विजयतामुत्सवमाहात्म्यम् !! को नाम वेत्तीदानीं यदुत्सवोऽयं मूलतः तेषां पानस्यानन्द आसीत्। इदानीन्तु कस्मिंश्चि-दप्युत्सवे महता सम्भारेण प्रमोदो भवतु, परं मत्सरेण प्रमादः न कदापि भवतु, तथाप्युत्सवो भवतु !!!

इदमस्ति वस्तुतो वेदान्तविदां मीमांसकानां च वरणीयं वचनम् !

---

**राष्ट्रिया गोष्ठी, राष्ट्रियं पत्रम् !!**

साम्प्रतम् 'राष्ट्रिया गोष्ठी' 'राष्ट्रियं पत्रम्' इत्यादि वाक्यानि प्रायश उपचर्यन्ते लोके। परं राष्ट्रियशब्दस्तु राजश्यालार्थे प्रयुज्यते। अतः पूर्वोक्तयोर्वाक्ययोः 'राजश्यालस्य गोष्ठी' 'राजश्यालस्य पत्रम्' इत्यर्थं कोऽसौ विपश्चिदपश्चिमः परिहर्तुं प्रभवेत् !!

राष्ट्रीय शब्दस्तु 'वृद्धाच्छः' इति सूत्रेण सिद्ध्यति। 'राष्ट्रावार-पाराद्घखौ' इति सूत्रे सत्यपि समाने शैषिकेऽर्थे व्यक्तिपक्षे सावका-शत्वप्रदानाय 'वृद्धाच्छः' इति सूत्रेण पर्यायेण छप्रत्ययः शक्यते कर्तुम् !!

---

१. यज्ञग्रन्थेषु तथैवोपलब्धेः, अभिषवार्थकात् षुञ् धातोश्च उत्सवशब्दस्य निष्पत्तेश्चैवं निश्चीयते।

## कथं खीरातः श्रीकृष्णजन्म !!

श्रीकृष्णजन्माष्टम्यां प्रतिवर्षं खीरातः भगवतो श्रीकृष्णस्य जन्म सम्बोभूयते। खीरातः श्रीकृष्णजन्मनोऽस्त्यतिरोचकं कारणम्। तथाहि—

भगवान् श्रीकृष्णः क्षीरशायिनः विष्णोरवतार इति पुराणेषु वारं वारं स्मर्यते। तस्मादेव क्षीरसागरात्, यदा यदा हि धर्मस्य ग्लानिर्भवति तदा तदा धर्मसंस्थापनार्थं भगवान् मनुजलोकेऽवतरति।

प्राकृते युगे तु खीरतः भगवान् सम्भवति स्म। यतो हि क्षीर-शब्दोऽयं 'खीर' रूपेण प्रयुज्यते स्म।

पश्चात्तु खीर-खीराशब्दसाम्यात् खीरखीराशब्दार्थाविविच्य-मानभेदाः खीरातः भगवतो जन्मेति घोषणां व्यदधुः। तदा प्रभृति खीरातः भगवतो जन्म सम्पद्यते !!

## घटकुट्यां प्रभातम्

न्याय एष दर्शनशास्त्रेषु प्रचलति। तथाहि-आपणिकः कश्चित् एकदा द्रव्यजातं विक्रेतुं नगरान्तरं गतः। तत्र स रात्रौ सम्प्राप्तः। प्रकृत्या मितम्पचोऽसौ वणिक् तस्य द्रव्यजातस्य शुल्कं (चुंगी) दातुं नाचकमत। तदेवं स शुल्कशालां (चुंगीगृहं) परिहातुं विपथेन गमनं प्राकरोत्। स मार्गात् मार्गान्तरं, वीथितश्च वीथ्यन्तरं परिभ्रमन् सकलामपि रात्रिं व्यत्यैत्, मनागपि च निद्रां नालभत। परं यदा किंचित् प्रभाता रजनी तदा स विस्फारितचक्षुर्भ्यामपश्यत् यत् स शुल्कशालाया एव द्वारि स्थितोऽस्ति। तदा तस्य मुखान्निःसृतमेतद् वाक्यम्-हंहो घटकुट्यां (शुल्कशालायां) प्रभातम् !

न्यायमेनं पुरस्कृत्य एका कथा प्रचलति। साऽत्र संक्षेपेणोपवर्ण्यते।

एकदा नगरे कस्मिंश्चिदेकः श्रेष्ठिप्रवरः प्रतिवसति स्म। अस्तिधनोऽसौ श्रेष्ठी सकलोपभोग्यसामग्रीभिः सुसम्पन्नः, ज्ञातिवर्गैर्भृत्यवर्गैश्च परिवृतः सुखं जीवनं व्यत्येति स्म। नासीत् किमपि वस्तुजातं यन्न तस्मा उपलब्धम्। तस्य प्रभूतं धनं, तस्य धौतं सौधं, तस्य प्रभूतं प्रभावमुपवीक्ष्य नागरिकास्तस्मा ईर्ष्यन्ति स्म।

एवमतिक्रामत्सु दिवसेषु गच्छति च काले एकदा सुखशयने शयानोऽसौ श्रेष्ठिप्रवरः स्वप्नमद्राक्षीत् यत् मृत्युदेवी तस्मै भणति यत् दिनत्रयानन्तरम् अहं (मृत्युदेवी) त्वां (=श्रेष्ठिनं) प्राप्य ग्रहीष्यामि।

स्वप्नमेनं दृष्ट्वा स चिन्तासन्तानवितानैकतानः दुःखसागरे न्यमज्जत्। नासन् सकलान्यपि विलासवस्तुजातानि तस्य प्रमोदाय। स तु तूष्णींभूय परिग्लानः दिनान्यथ घण्टाः अथ च क्षणानि गणयितुमारभत। एवं चिन्तातुरः स धनिकः रात्रावपि निद्रां नालभत। चिन्तयतस्तस्याक्ष्णोः प्रभातमासीत्।

दशायामस्यां मित्राणि तस्य संमन्त्रयामासुः—'ब्राह्मणानाहूयास्योपायः कश्चन पृच्छ्यताम्'। सन्दर्शिनस्ते कमप्युपायमवश्यं विधास्यन्ति। तदा

श्रेष्ठिप्रवरः ब्राह्मणानाह्वयत्। पूर्वञ्च स शर्कराभिसंस्कृतैः वरपायसैः, अहतवस्त्रकृष्णगोदानादिभिस्तान् ब्राह्मणानतीतृपत्। पश्चाच्च स्वप्नस्यार्थमुपायञ्चाप्राक्षीत्। ब्राह्मणाश्च कालं नक्षत्रादिकं च विचार्य अवोचन्-श्रेष्ठिप्रवर! महति प्रत्यूषे दृष्टः स्वप्नः न याथार्थ्यमतिक्रमते। अतो मृत्योरागमनमवश्यम्भावि। श्रेष्ठी त्वत्यन्तीनं दुःखं प्राप्नुवन्नतितरां च बिभ्यत् ब्राह्मणानवोचत्-'विप्रवराः! कथमपि मां त्रायध्वम्। अहं नास्मिन् समयेऽमृतमयं जगत् त्यक्तुमिच्छामि। किं भविष्यति मम विलपन्त्याः सीमन्तिन्याः, कथं च जीवनं धारयिष्यन्ति ममाबुधाः पुत्राः। तत्कथमप्युपायः विचार्यताम्' इत्येवं स भृशं पर्यदेवीत्।

ब्राह्मणास्तु तस्य रोदनेन पर्याकुलितचेतसः गम्भीरतया विचार्योपायमचिचिन्तन्, अवादिषुश्चैवम्-श्रेष्ठिप्रवर! ईश्वरस्य प्रसादेन त्वत्कृते अलभ्यं नाम न किञ्चिदस्ति। त्वमसि भूयसो धनस्य गोप्ता, महतो ज्ञातिवर्गस्य च रक्षिता। हस्त्यश्वं, रथिकपादातम् इत्येवं बलमपि त्वमुपदधासि। तर्हीदानीं मृत्युदेवीयं त्वया वञ्चयितव्या। असत्यन्यस्मिन्नुपाये वञ्चनमपि शंसन्ति नयज्ञाः। तदिदानीम् उत्तिष्ठ मे धनपते! त्वमिदानीमेवाध्वनीनं वाजिनं समारुह्य दूराद् दूरतरं स्थानं व्रज। यदा मृत्युदेवी नियतसमये तव ग्रहणायागमिष्यति तर्हि त्वां न प्राप्स्यति। मृत्युदेवीयं न कदापि त्वत्तोऽप्याशुतरं वाहनमभिरक्षति। अतस्त्वां सा कदापि न प्राप्स्यति।

श्रेष्ठिवरश्च ब्राह्मणानां वचनं श्रुत्वा भृशं समतुष्यत्। अथ च मनागपि कालक्षेपमकृत्वा मृत्योर्दूरतरं स्थानं गन्तुमुत्सुकः स महान्तमश्वं समारुह्य प्रस्थितः। रात्रौ च दूरतरमाश्वीनं स्थानं 'बसरा' नगरं सम्प्राप्तः। तत्र स्थित्वा च स दीर्घं प्राणत्, अचिन्तयच्च यदिदानीमहं मृत्युपाशात् स्वकीयं जीवनमभिरक्षिष्यामि।

परन्तु किमिदम्? तस्मिन्नेव समये स तेनैव वेषेण, तेनैव प्रकारेण, तयैव गत्याऽऽगच्छन्तीं मृत्युदेवीमद्राक्षीत्। वेपथुश्च शरीरे तस्याभूत्, रोमहर्षश्चाजायत। अथेदानीं तस्य जिह्वा तालुना समासज्जत्। इदानीं स किं कुरुतामित्येवं स व्याकुलितमनाः समतिष्ठत्।

सा मृत्युदेवी तु श्रेष्ठिप्रवरमुपगत्य इदं बभाषे—धन्यवादार्होऽसि त्वम्। तव ग्रहणं, यमसदनं प्रति गमनञ्चास्मादेव 'बसरा' नगरात् सुनिश्चित-

मासीत्। अहमचिन्तयम्—'कथं त्वत्सकाशं गत्वा त्वां 'बसरा' नगरमानेष्यामि, यस्मात् स्थानात् तव महाप्रयाणं सुनिश्चितमस्ति। परमिदानीन्तु त्वं स्वयमेवात्र समागतः। एवं त्वया चिन्ता मे उल्लाघीकृता। अतस्सर्वथा धन्यवादार्होऽसि त्वम्। इदानीन्तु यमसदनं प्रति प्रयाणाय सज्जीभव।

श्रेष्ठिप्रवरस्तु स्वां बुद्धिं भाग्यं वाऽनुक्रोशन् अवादीत्—हन्त भोः इदानीं घटकुट्यां प्रभातम् !!!

भाषाशास्त्राधृताः

## हास्यव्यङ्ग्ययुताः कतिपये श्लोकाः

### धनस्य प्रभावः

धनस्य दीर्घं माहात्म्यं ख्यातुकामो गुरुस्तदा ।
एवं संप्रोक्तवान् शिष्यं शब्दानां सिद्धिपूर्वकम् ॥

धनस्य लाभमात्रेण धन्य इत्युच्यते बुधैः ।
तस्य च क्षयमात्रेण अधन्यत्वं प्रयाति सः ॥[1]

निर्धने निधने चैव नास्त्येवं महदन्तरम् ।[2]
निर्धनो मानवो लोके मृतवज्जायते यतः ॥

अकुलीनोऽपि च दुश्शीलः श्रेष्ठित्वेन प्रशस्यते ।
अज्ञातगुणग्रामश्च स्वामी संजायते पुनः ॥

सर्वं चैतद्धि माहात्म्यं हिरण्यस्य धनस्य च ।
अतः सर्वेऽपि वांछन्ति धनं धान्यं सुपूजितम् ॥

---

१. धनगणं लब्धा (पा० सू० ४।४।८४) इति पाणिनिशासनानुसारेण केवलं धनं लब्धा पुरुषः धन्य इत्युपचर्यते । धनेन हीनः पुरुषः अधन्यो भवति । परन्तु साम्प्रतम् 'अधन्य' शब्देन नीच इति वा दुष्ट इति वाऽऽख्यायते ।

२. निधनशब्दः मरणार्थे प्रयुज्यते । परं मूलतोऽपमानपूर्वकं धनं लब्धवते पुरुषाय शब्दोऽयं प्रयुज्यते स्म । तथाहि—'निकारः पूर्वं वै तदनु धनं चेति निधनम् ॥

### पाणिनेः शासनं चित्रम्

जनोपकारं कुर्वन्तं पुण्योपसदगामिनम्
उपेयिवांसं नो लाभम् एवम् अध्यापिपद् गुरुः ।

क्रोधं मा स्म गमो भद्र मा दुःखं भजतात् परम् ।।
उपकारिणेऽपि लोकस्य नायं लोकः सदाशयः ।
एवं पुरातनीं वीथिं पाणिनिः प्रत्यपादयत् ।।

दुष् धातौ गुणं कृत्वा दोषं निर्मितवान् हि सः ।
गुणशब्दे तथा वृद्ध्या गौणं निर्मितवान् गुरुः ।।

### रलयोरभेदः

रेफस्य लस्य चैकत्वं भाषमाणं मनस्विनम् ।
गुरुं पप्रच्छ शिष्यस्तु अतिकौतुकसंयुतः ।।

रघुस्तु भूपतिर्ह्येवं लघुरूपमवाप्नुयात् ।
राघवो राजवंशश्च लाघवाख्यानभाग्भवेत् ।।

### वावदूकाः स्त्रियः

गृहस्थः कोऽप्यधीयानः सर्वासामपि हि स्त्रियाम् ।
वावदूकतया खिन्नः कारणं प्रोक्तवांस्तदा ।।

त्यक्त्वा धातून् भुवि ख्यातान् विशेषबलयोगतः ।
शब्दसंघातार्थकं धातुं स्त्यैरूपं धातुपाठतः ।।[1]

हेतूपादानरूपेण ब्रह्मा प्रायूयुजद्यतः ।
नेशिरे ता अतो जोष्टुं वाचः संयमनं दृढम् ।।

---

१. स्त्यै ष्ट्यै शब्दसंघातयोः इति शब्दसंघातार्थकात् स्त्यै धातोः स्त्री-शब्दव्युत्पत्तिः ।

## स्वर्गे निवासनम्

यावज्जीवं व्रतं कृत्वा ज्योतिष्टोमादियागतः ।
देवताः प्रीणयन्तश्च भूपाला आहिताग्नयः ॥
एकान्तानन्दसम्पूर्णे अप्सरोमोदसम्भवे ।
घृतक्षीरयुते स्वर्गे कामयन्ते निवासनम् ॥
परं त एव राजानो जरत्प्रायाः समन्ततः ।
स्वर्गीयतां न वाञ्छन्ति किमाश्चर्यमतः परम् ॥

## पृथिवीचन्द्रमसोः सम्बन्धः

भूगोलं पाठयन् विप्रः शिष्यं पप्रच्छ वै गुरुः ।
सम्बन्धः कः पृथिव्याश्च चन्द्रस्य वर्तते मिथः ॥
भ्रातुः स्वसुश्च सम्बन्धः प्रत्युवाच स तत्क्षणम् ।
कथमित्युक्तवति तस्मिन् व्याचख्यौ स हि बालकः ॥
पृथिवी वर्तते माता चन्द्रमाश्चापि मातुलः ।
मातृमातुलसम्बन्धः, पूर्वोक्तो वर्तते यतः ॥

## ब्रह्मचारी सभापतिः

साभापत्यं याचमानाः केचिज्जानपदास्तथा ।
विनताः सेदिवांसस्ते नैष्ठिकं ब्रह्मचारिणम् ॥
अकथयंश्च नो देव ! स्वीकरोतु पदम् इदम् ।
कविसम्मेलनस्यास्य महतो गौरवास्पदम् ॥
मुहूर्तं स तु आस्थाय नैष्ठिकः प्रत्युवाच यत् ।
एकस्या अपि वै देव्याः पतित्वं भजते न यः ॥
किं स वर्णी सभायास्तु पतित्वं रक्षितुं क्षमः ?

## किंकरः शंकरश्च

द्यूताचारविधानेन सामोदं कालक्षेपिणम् ।
चिरादुपेयिवांसं तं कितवं व्यग्रमानसम् ॥

कोपावेशितरक्ताक्षी पत्नी पृष्टवती तदा ।
कथं विलम्बं साधयसे तत्र किं क्रियते त्वया ॥

एवमुक्तः स वै धूर्तः पर्याकुलितमानसः ।
प्रशंसाप्रवणो भूत्वा तामेवं निजगाद यत् ॥

क्रोधं मा स्म गमो देवि मा दुःखं भजतात् परम् ।
प्रश्नाख्यानविधानानि नेच्छन्ति कवयो यतः ॥

किंपूर्वकेण प्रश्नेन किंकरो भवति मानवः ।
शान्ति समीहमानश्च मानुषः शंकरो भवेत् !!

## मऊनाथभञ्जनं नाम नगरम्

पुराकाले जुष्टे प्रचलितमुमानाथभजनम् ।
जनामोदस्थानं सुरमुनिनुतिग्रामगहनम् ॥

परं किंचिद् ध्वान्ते प्रचलति मनोविभ्रमकरे ।
विपर्यस्ते वर्णे समजनि मऊनाथभजनम् ॥

तमिस्त्राज्ञाने तु सुनिबिडगभीरे बहुविधे ।
समाच्छन्ने गाढ़े विकटसन्तमसे परिवृढे ॥

भवेशस्यावद्यं समजनि शिरः भंजनमहो ।
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥

### अर्धे जनाः भ्रष्टाः

कोपावेशविधेयेन प्रोक्तं केनापि संसदि ।
जनेष्वेतेषु तिष्ठत्सु अर्धे भ्रष्टास्समन्ततः ।।
स्थीयतां लज्ज्यतां चैव त्वरया मार्ग्य क्षमाः ।
संहरैतान् सकलुषान् शब्दबाणान् विशेषतः ।।
एवं क्षमापराचीनचेतोवृत्तिभिरुत्कटैः ।
आदिश्यमानो विवशः एवं शोधितवाँस्तदा ।।
क्षम्यतां परमोदारैः नासम्मानितुमुद्यतः ।
शोधयामि स्वकं वाक्यम् आहैवं प्रणताननः ।।
गुणग्रामगरिष्ठायां महीयायां हि संसदि ।
न सन्त्यर्धे जनाः भ्रष्टा इत्येवमनुमन्यताम् !!

### किमाश्चर्यमतः परम्

विभां करोत्यतो हेतोः सूर्यदेवो विभाकरः ।
प्रभां करोत्यतो हेतोः सूर्यदेवः प्रभाकरः ।
दिनभ्रमणनिश्श्रान्ते अस्तंयाते विभाकरे ।
'विभावरी' समागच्छेत् किमाश्चर्यमतः परम् ?

### शब्दानामजिह्मा राजपद्धतिः ?

वपनं संरोपणे चापि कर्तने दृश्यते यथा—
"यादृशं वपते बीजं तादृशं वपते फलम्"
बीजस्योत्पादनाद्धेतोर्वापकोऽसौ कृषीवलः ।
केशानां कर्तनाद्धेतोर्वप्ता नापित उच्यते[1] ।
यत्रोत्पत्तिर्विनाशश्च साम्यं वै जुषते मुदा ।
कथं स्यात्तत्र शब्दानामजिह्मा राजपद्धतिः ?

---

१. वेदे नापितार्थे 'वप्ता' शब्दः सन्दृश्यते ।
यथा—वप्तेव श्मश्रु वपसि प्रभूम— ऋ० १०/१४२/४

## नसोमें प्राणोऽस्तु

The nose has been regarded to be one of the most important organs of our body not so much because it smelt as also because it provided a place for our most important thing—प्राण 'a vital force'. That the solemn prayers in the Vedas were offered to make this vital force live in our nose, but not even once to keep potentiality of smelling therein, testifies to our assumption.

A few isolated words have kept an account of different types of noses during long period of history. In point of fact, the beauty of a nose served as a model for all other organs.

The men of long noses were regarded to be good and great. Similar is the case with those of aquiline nose ! It is reflected by the word 'शुकनास' 'a man having a sharp nose like a parrot's beak'.

The beauty of such a nose has also taken expression in the words अवटीट, अवनाट, अवभ्रट,. Going by the authority of Panini's Ashtadhyayi अव adds to टीट, नाट and भ्रट suffixes. These words mean a glorified man with hook-nose ! Such men became renowned among nobility (घ्राणश्रवस्).

The flat of nose however was felt to be a stamp of foolishness. The proportion of flat of nose became a deciding factor of the degree of foolishness ! The more flat nose a man had, the less wisdom he

possessed ! A few races of mountaineers like निषाद with whom Aryans came into contact were relegated into ridicule as if they were noseless (अनास). So it was the collision between the races of hook-nose and snub-nose through thousands of years.

Many other words like चिक्किन, चिपिट were also coined to laugh at their snub-noses. The sense of flat nose inherent in the word चिपिट was so popularized as to expand its meaning to every flat thing in the Hindi word 'चपटा'.

This article aims to give coverage to this kind of noses.

---

## अक्ष्णोर्मे चक्षुरस्तु

The Vedic sage is very eager and serious in his prayer of Vedic lore for potentiality of eyes. For no organ is so sensible to make a clear and definite perception of things as that of sight. That is why, in Sanskrit and in its cognate languages, as well as in English the verb 'seeing' is regarded to be tantamount to considering.

In Indian philosophy too the sense of sight stood first in importance. A technical term प्रत्यक्ष for all immediate presentative cognition is originally related to optical cognition.

Indian wisdom is inclined to relate the pair of eyes to all kinds of sensuous perceptions. It is

more of poetic rather than scientific expression what has been conveyed by some interesting words. The eyes not only see but also tell the height of delight and the depth of sorrow, also taste the sourness of a mango. We cannot otherwise explain the etymology of the word चक्षु 'eye' derived from the root चक्ष् 'to tell'. Our eye has, in fact, its own language more vivid than the heap of words, more impressive than the art of a tongue.'

The eye tastes the sourness too. Seeing a mango, we have our mouth water. The mango it thus tasted by our eyes. A Hindi verb चखना 'to taste' has been descended from the same root चक्ष् as has originated the word चक्षु. A persian word 'Casidan' 'to taste' is also a descendant from the same root चक्ष्. We cannot thus overlook someone or other relation between the two.

This chapter is devoted to expose the variety of speculations that has cast its shadow on the words relating to the eyes.

---

## अम्रितान्मा अमृतं गमय

The mango is one of the oldest and indigenous fruits of our country. A botanical term 'Mangifera Indica' reveals its Indian origin. The Shatpatha Brahmana refers to this fruit as a solemn simile 'A virtuous soul is delivered from mortal world just as ripe mango is cut down from its stalk. Facts carry weight to suggest us that such delicious fruits

as mango gave rise to the term सफल 'successful' but litterally 'along with fruits' in Sanskrit and '*fruitful*', 'to bear fruits' in English.

The fruit under review has become the source of delight for the people of all faces of history. It has, with the efflux of time, found means to overstep the bounds of our country and won universal praise and applause.

But we must look the other side of the shield too. Once upon a time it was not the sweetness but the sourness of it that became the watchword of the day. It has, for a long time, served every household as a model of sourness. What can suit more to vindicate this strange phenomenon than the term आम्र 'the mango-fruit' derived from अम्र 'the sourness'. आमलक, आमलकी has also the same derivation.

It was not till the modern age that a man has taken the opportunity to put a 'sweet mango' on the tip of his tongue. A lot of patience was maintained and a process of grafting was discovered sooner than eat the sweet mango. Soon afterwards, a number of words and proverbs were grafted on to enrich our language.

The mango, a king of fruits, now tastes sweet rather than sour, smells light and delightful, and above all, so charming, so delicious it is as to fascinate all the people—from learned to laity, from prince to pauper.

This article is intended to shed light on a page of history by the torch of words.

---

# पुंस्कोकिलोऽसौ मधुरं चुकूज

Cuckoo has been touching for a long time past the heart-strings of all people—from learned to laity from prince to pauper. We have possibly in the Yajurveda its first written record that it gives a consummate pleasure to the youths in spring. (कामाय पिक:) Never has it since been forgotten by long series of succeeding poets for its melodious and fascinating voice. It grew thus as a model for all sweet voices and songs.

The Sanskrit word कोकिल 'cuckoo' and काक 'crow' have developed out of onomatopoeic theory, the latter of them having also the testimony of Nirukta. To them may be added an exhaustive list of the words made of such theory. But it is in rarity of the cases that the two different words of the same meaning were developed on the same ground. The Sanskrit word कोकिल and the English 'cuckoo' have charecteristics of the same, being developed out of the imitation of its voice. Is it not a wonder that such a tiny bird has given the same attraction, the same delight to the people of so distant places ? Is it not paradoxical that under so tiny feet of a bird was epitomized such a long time and space ?

The root √ कु may take a frequentative form as कोकूयते. That this word does not conform Panini's general rule of palatal formation gives a scope to entertain the hypothesis that it is in tune of its imitation as कू कू.

Another charecteristics of this bird is denoted by the word परभृत 'nourished by another'. It is so because it leaves its eggs to be hatched by the crow.

This article thus proceeds by words to tell a tale of the bird cuckoo otherwise unknown.

---

## जडदेवो वा मूलदेवो वा

मूर 'a stupid' referred to in the Veda is called as a देव 'a god'. Not much different is the case with जडदेव referred to in सांख्य. Why was a stupid called as a god ?

मूर-मूल and जड simply mean a root of tree. The question arises again; how it is that these words simply meaning the root have gone as far as to express 'a stupid'. A root and a stupid—is there any correlation between them ? The root necessarily lives in a pitch dark—does this situation give us an unfettered right to "adorn" it as a stupid ? This is apparently far from being the case. The secret of all glory, all beauty of a tree is hidden into its roots. Every fibre of the tree to the last point is indissolubly related to the so-called stupid root to derive always the sustenance from it.

Why was then the word मूल called as a stupid ? To unravel this knotty point of literature this interesting article proceeds.

---

# क्षयो वा क्षेमं वा

Since the time of the Vedas the term क्षय has been used for an abode and at the same time for the decay. How is it that the home so beloved to the people, so endeared to their heart was correlated with the scene of decay ? The root of this word has also been precipitated into the same paradox. The root क्षि is liable to originate such words as क्षय्यः, क्षीणः 'destroyed' on the one hand and क्षितिः. क्षेत्रम्, क्षेमम् 'comfortable' on the other.

We may read diametrically opposite ways of life between the lines of these two word-groups. Some demonstrated a detached frame of mind from all worldly affairs including house and home. To them, it was for goodness' sake to live in others home like a snake ! Such a logic of fact would have gone to correlate the house with the destruction.

For majority of the people, however, it was far from being the case. The common people were eager to have some roof over their head. We may glean out from Sanskrit literature, a number of references to the houses of complicated description, of spacious rooms with splendid doors and windows letting in amplitude of air and light. The implication of the term विशाल and of some other words has trodden on the same footing. Such an attitude of ovation must have given an ample scope and soil to flourish the words like क्षेत्र and क्षेम.

This chapter is devoted to shed light on the words for dwelling and housing.

# छायाचित्रं वा प्रकाशचित्रं वा

One of the most important factors that distinguished the earliest man from other animal species was the instinct to imitate the things around him. On the oldest archaeological records has been traced out the testimony of this instinct by some kinds of line-drawings. This human phenomenon has, in course of time, evolved and advanced to eminence a special branch of learning—the art of drawing and painting.

Thus arose the series of painters all through ages to show the modelling capacity par excellence, drawing and painting in skilful lines and in bright colours, much to excite popular wonder and admiration. This wonder is reflected by the words चित्र and विचित्र 'the manifold pictures' which have gone afterwords as far as to mean 'strange and wonderful things'. Such a process has given rise to the word चित्र to change for a nominal verb (नामधातु) in the form of चित्रीयते etc.

The eighteenth century has witnessed a new technique in which not an object but the shadow of it was utilised to make a portrait. The pictures by the shadowgraph being beautiful and economical both, obtained wide celibrity among common man and afterwards among the aristocracy. These pictures have then fonnd their way to other countries inclusive of India which has borrowed the shadowgraph as the name of छायाचित्र 'a picture formed by a shadow'.

But to the new and living pictures, there developed a photography that has characterised the modern age. Among many marvels of modern science it is virtually the great. Our new camera obscura photographs by the action of light directly on the object. It has nothing to do with the shadow of it. To add to our wonder the pictures are yet to be called as छायाचित्र in some quarters.

---

## वपुषो भूषणं वस्त्रम्

As far as we can trace back in times past, someone or other of the garments were used to save man from inclemency of the weather. The oldest compendium, the storehouse of Indian culture— The Vedas referred to a variety of garments consisting of various kinds of barks and dear-skins. Munis were clad in skins or soiled garments (R. V. 10.136.2). The term कोशं वास 'a garment made of fodder, testifies to this conception.

But frequent references were made in vedic literature to ऊर्णासूत्र 'woolen thread' the clothes of which were more durable, more fashionable than those previously referred to. Clothes of various types, bed-covers, blankets (कम्बल) were woven of sheep's wool.

An interesting note may be taken of the term 'अम्बर' associated with कम्बल. The word 'अम्बर' once having meant 'a space' has gone as far as

to mean 'the cloth'. How is it that a word was subjected to the transformation of such meaning as had no concern with the former? To find solution of it we should go to Prakrit word रत्तम्बर 'a red blanket' (from Skt. रक्तकम्बल). It was divided into रत्त and अम्बर and the latter has come to mean all of the clothes. This word, popularized as it was, included into Sanskrit stock to show the same meaning.

The most interesting feature, however, reserved for the last. Cotton clothes were discovered first by the race of निषाद as is proved by the words कर्पास 'cotton' कर्पट 'cotton-cloth' of Astro—Asiatic origin. With the discovery of this cloth the word कर्पट and its meaning became a thing of adoption for the people at large because its softness and tenderness has provided them with ease and luxury of life. But this article, much to our astonishment, subjected to be complete rejection without much ceremony by nobility of his time, as was the case with all other new things. Such a queer attitude has led up to coin the word कार्पटिक 'a burglar' though litterally 'one who wears cotton-clothes'. In course of time, the table was turned-the tide of opposition went down. The comfortability of the clothes cast a spell upon them and the word found a vent to enter into imperial domain of nobility with the form of पट. In has, not long afterwards, become a key-example for Nyaya philosophy.

The people at large, however, who were adapted to all new things, adopted both-sound and sense-the

word कर्पट and the meaning of it. The adoption of the word has led to change to कपड़ा in Hindi.

This article is intended to disclose such facts of clothes as are peeping out from the veil of the words.

---

## महर्षभत्वं वृणुतां सदा सखे

The reverence for the bull went on steadily gathering volume from the time immemorial. He can be traced back to Indo-European times, the proto-types of the word 'ox' being available almost all I. E. languages. (Sanskrit-उक्षा English-ox, Old High German-ohso, Gothic-auhsa). For agriculture and transportation he could not be dispensed with. He is mainly used for ploughing fields and drawing carts. Various prayers in the Vedas were offered to make the people rich in bulls and cows. The words गोपा and पशुपा convey such expressions.

He was always appreciated for his matchless strength and substance. At no period of history was his capacity of ploughing and harnessing lost upon the countrymen. He has thus, in course of time, grown as a model for strength, a thing of envy for people. So a solemn simile has come into vogue-'a man like a bull' (नरर्षभ). राम and other kings were endowed with such a good strength as the bull had. The promulgator of Jainism was also named after ऋषभ (lit. the bull) as ऋषभदेव.

His indomitable strength has always highly impressed the head and heart of the people. He has marked a stamp on some other words. The name of धुरन्धर 'one fit to bear the yoke', applied originally to the bull, has, at later times, denoted a man of strong and sturdy muscle. Similar is the case with धुर्य and धौरेय.

Another word 'पुंगव' a large bull, opposed to दारगव, has gone as far as to denote a man of vigour and vitality, generally in compound form viz.—मुनि-पुंगव, पंडितपुंगव.

The founder of न्याय philosophy could not also resist the temptation of being named as गौतम. As the etymology of this word suggests it simply means 'the largest bull', the word गो adding to suffix तम in superlative degree.

This article is an attempt to look into the charecteristics of the bull lying behind the words.

---

## कृपणः कल्पते सदा

To the niggard our idea belongs that he ought to be centred in money-making by the fair or foul means, that he should be greedy for hoarding all his wealth. But so far as the Sanskrit word कृपण is suggestive to us, the niggard is he who has the capacity for availing everything what he wants. For where there is wealth there is power, there is prestige. In such a niggard dwells together noble descent, great versatility and high quality (यस्यास्ति वित्तं स नरः कुलीनः.........).

The niggard, in fact, is not a man to grudge, to them who know the secret art of how to loosen his pursestring. The word कृपा 'the kindness' and कृपण 'niggard' being derived from the same root कृप् 'to make' suggest that there is a sort of concurrence between the two. The Upanishad exhorts the community of niggards that by being ashamed, by being afraid of, they should give, in the name of so-called kindness, such things as has been given by वाजश्रवस to his subjects !

This article thus proceeds to tell a tale of कृपण 'niggard' with associated words and stanzas.

---

## हिरण्यमेतद् रमते हि रम्यम्

The metal for which the lust and avarice of the mass of mankind knew no bound, around which hinged the rise and fall of states and nations of the world—it is gold. Nothing was regarded to be so charming, so pleasing in the world as the brilliance of gold !

In India too, the people from the mightiest prince to the meanest peasant were hankering after this yellow metal. A lot of myths, a host of words gathered round gold to characterize its excellence.

A special word हिरण्य 'gold' was coined denoting it a metal of exultation and jubilation ! That this jubilation is mainly caused by its charming yellow colour is indicated by an adjective word सुवर्ण 'of beautiful colour' which subsequently came to be

used as a substantive denoting gold. The English word 'gold' primarily meaning 'yellow colour' is another indication of people's fascination for its charming colour.

Among variety of its qualities one was its delighting billiance that has always stolen the hearts of the classes and masses alike. This metal, much to people's wonder, did never lose its shining. Besides, the more it is heated the more it shines forth !! This quality has given rise to the principle that gold could not be made but of fire atoms. This concept led to coin such words as तापनीयम्, जातरूपम् etc.

It was, in fact, the seizure of gold-fever that the middle-age saw the rigorous attempts to transmute baser metals into gold. Day and night fires were going in alchemist furnaces in the gloomy basements of stone-castles. As far as the word 'Chemistry' is suggestive to us, this science owed its origin to the endless practices for gold !! For the art of transmuting metals was called as 'Kimia' in Arabic and that was borrowed by English in the form of Chemistry !! India too has witnessed the development of रसायन शास्त्र through this kind of vehement activies for gold.

This yellow metal was longed for by the people of all walks of life not excepting the priests and devotees. We hear the Brahman Granthas narrate interesting stories and myths to justify why should the sacrificial priests be given gold as a gift. This

concept has found expression on an interesting word कार्तस्वर 'gold to be given to sacrificial priest'.

This chapter aimed at embodying such words as have been stamped by the concepts of gold.

---

## अथातो गोमयवृत्तं व्याख्यास्यामः

To the cow has been attached the most generous impulse of people from time immemorial. The feeling of reverence went on steadily gathering volume as the march of time. She was thus closely associated with the life of people. The Vedas have very fondly recorded all her activities. Her roaming on the pasture, her living in the cow-pen, her chewing the cud, her yielding milk-in short all her activities have made a passionate appeal on popular mind. A number of words were coined and gathered round her activities and her products.

Cow-dung was also regarded to be the most profittable thing for natural manure. Out of the name of it developed a good number of words and a host of similes in Sankrit and in Prakrit too.

This article is intended to give an interesting account of this kind of words.

---

## मत्तो जातः सुरापायी

Soma and Sura appeared from Indo-Iranian ages have won ovation of the people at large through

all periods of history. Both of them were inebriating drink, though the latter was extremely intoxicating as compared to the Soma. All of the poets sages and saints have recalled them in endearing terms. Such fascinated were they with the Soma that whole of ninth Mandala of R. V. is devoted to this invigorating drink.

Sura, though not so much appreciated among nobility, has marked its stamp on words. The word 'Sura' itself indicate someone or other its relation with सुर 'the gods'. The other names of सुरा such as विजया, मत्सर etc. show its triumphant and exhilarating effect on minds and muscles.

Another word उत्सव being traced to सु 'to compress' simply denotes the festival of compressing the Soma. It was the day of great jubilation indeed when all of the people were singing and dancing, pleasing and enjoying their life to the full, with the peg of Soma. So deeply was this function left an impression upon popular mind as to expand the meaning of the word उत्सव to all kind of festivals.

This article is intended to shed light on this corner of literature.

## Dr. Sudyumna Acharya, a biodata

*Date of birth*— 9 January 1946

*Place of birth*—Kolgavan, Satna (M. P.) Here has been founded an Indological Research Institute named Veda Vani Vitan.

*Education*—First In Vyakaranacharya. Winner of 8 Gold medals in M. A. for being first class and first in order of merit of faculties and departments of University of Allahabad. Obtained D. Phil. degree from the same University.

Research—Undertaking a comprehensive work on linguistics under major research project sponsored by the University Grants Commission, New Delhi. More than 50 research papers were published in the reputed journals. On the invitation of University of Vienna, Austria (Europe) for the World Sanskrit Conference he has attended the W. S. C. and presented a comprehensive research paper on linguistics that was highly appreciated by scholars.

A progressive writer, critic and eloquent speaker on philosophy and modern science as well as Sanskrit grammar and linguistics.



**डा० सुद्युम्न आचार्यः —**

**संक्षिप्त परिचयः ।**

**जन्मतिथिः**—९ जनवरी १९४६ ।

**जन्मस्थानम्**—कोलगवाँ, सतना । साम्प्रतम् अत्र वेद वाणी वितानं, प्राच्यविद्या शोधसंस्थानं संस्थापितं वर्तते ।

**शिक्षणम्**—संस्कृतविश्वविद्यालयवाराणसीतः प्रथमश्रेण्या व्याकरणाचार्यः । इलाहाबादविश्वविद्यालयतः M. A., D. Phil. इत्युपाधिधारकः । M. A. परीक्षायां संकायान्तरे, संकाये, विभागे च सर्वप्रथमत्वात् अष्ट स्वर्णपदकानां विजेता ।

**शोधकार्यम्**—विश्वविद्यालयानुदानायोगेन स्वीकृतायां बृहत्यां शोधयोजनायाम् अनुसन्धानं कुरुते । अधिकपंचाशाः शोधलेखाः शोधपत्रेषु प्रकाशिताः । यूरोपस्थे ऑस्ट्रियादेशे समायोजिते विश्वसंस्कृतसम्मेलनावसरे वियनाविश्वविद्यालयेन निमन्त्रितः । तत्र व्याकरणभाषाविज्ञानविषये शोधपत्रपाठेन विद्वद्भिः परं प्रशंसितश्च ।

दर्शनशास्त्राधुनिकविज्ञानविषये व्याकरणभाषाविज्ञानविषये च निरन्तरं कार्यं कुरुते । प्रगतिशीललेखकः, आलोचकः, चिन्तकश्च ।